हैमाचलचला गङ्गा हैमाभास्फुरभामिनी ।
मङ्कुरादर्शकाभासा मनोमङ्कुरलासिनी ॥ २८२

पूतप्रसन्नकीलाला तलनिम्नशिलागुणा ।
प्राकृतच्छविभासा च अप्राकृतयशोमयी ॥ २८३

आधारब्रह्मनैर्गुण्या शुद्धचैतन्यसुप्रभा ।
आस्तारतलगुण्या च सगुणब्रह्मसत्प्रभा ॥ २८४

अधोब्रह्मस्वभावा च ब्रह्मत्वतत्त्वकाशिनी ।
तलप्रकृतिबिम्बा च ब्रह्मानन्दप्रकाशिनी ॥ २८५

अज्ञानमलिनाधावा प्रज्ञानपुष्टिवर्धिनी ।
अज्ञानावस्थिताश्राया ज्ञानसूर्यप्रकाशका[2]॥ २८६

पारबालूकसंध्याता संध्याच्छविमनश्शमा ।
परानन्दगभीरा च मनोगभीरसान्त्विनी ॥ २८७

पक्षिसुस्वरसन्नादा नादमूलप्रशान्तिका ।
प्रशान्तरीतिकावाहा तत्त्वार्थबोधनापगा ॥ २८८

शर्करी रुचिरा गङ्गा शोकवाहा सुखावहा ।
अचलप्रशमावाहा मौनमध्यसुखस्वरा ॥ २८९

---

[2]बहुव्रीहिः

प्रदोषापाररम्या च प्रदोषशमसालया ।
प्रणवाधस्थशान्तिश्च प्रणवप्रशमालया ॥ २९०

नादादिप्रणवाकारा प्रणवामूलनीरवा ।
नीरवोद्भावनादा च प्रणवाकारसुस्वरा ॥ २९१

घनगानघनारामा घननीरवसुस्वरा ।
नीरवानीरसंगाढा नीरवामृदुगारवा ॥ २९२

घनपालाशवर्णाभा बालुकानीरवावहा ।
घनपाषाणरासा च घनान्धकाररोहिणी ॥ २९३

नीरस्मितोदयादित्या नीरसौमेरुकस्फुरा ।
नीरस्मेरस्तुतिस्तोत्री नीरपारप्रवाहिणी ॥ २९४

ऋतुपर्यायवैचित्र्या संदृष्टप्रकृतिक्रमा ।
स्वभावाविकृता गङ्गा विश्वप्रकृतिकर्फरा ॥ २९५

ग्रीष्मपीनपयोधारा हैमन्तशमितावहा ।
स्वच्छप्रशान्तिसंभासा वर्षाम्बुवर्णमृत्तिका ॥ २९६

हैमन्तहरिनीलाभा शरदिन्दुखबिम्बका ।
नीरकेलाससाभासा बिम्बप्रकृतिमङ्कुरा ॥ २९७

इन्दुसौन्दर्यकंबिम्बा इन्दुशेखरशेखरी ।
बिम्बेन्दुपूरदुग्धौघा विद्युत्स्फूर्तिप्रभासिनी ॥ २९८

फेनद्युतिहरिश्श्वेता फणिशायिपदोदका ।
नीलाकृतिघनश्यामा नीलनिर्मलनीरभा ॥ २९९

शिशिरावर्णसौवर्णा तप्तमानसशीतला ।
शैशिरोदकसौख्या च तपोयुक्तमनश्शमा ॥ ३००

कोलाहलाचला गङ्गा आक्रोशोपलवाहिनी ।
बालूकशान्तरीतिश्च शमशामितवाहिनी ॥ ३०१

गिरिमध्यावहा गङ्गा गिरिजालप्रसर्पिणी ।
हृषीकेशप्रतीतिश्च बहुलास्यतरङ्गिणी ॥ ३०२

हृषीकेशस्मिता गङ्गा हृषीकेशस्थलस्तुता ।
हृषीकेशपदाङ्का च हृषीकेशपदोद्भवा ॥ ३०३

हृषीकेशातिवैशाल्या हृषीकेशदमालिका ।
हृषीकेशकविस्फूर्तिर्हृषीकेशस्फुटस्तुतिः ॥ ३०४

धीशक्त्युत्तेजना गङ्गा धीमती श्रीमती सती ।
चिच्छक्त्युद्बोधकारा च चिन्तितार्चितश्रीधरी ॥ ३०५

विरक्तचित्तसुज्ञाना ज्ञानानन्दफलावहा ।
योगलीनत्वसंवर्धा तपस्साधनसुस्थला ॥ ३०६

श्रीकरी शीकरी माता शीकरस्पर्शलालिनी ।
कोपतापहरा गङ्गा पापापहसुदर्शिनी ॥ ३०७

गङ्गा गाम्भीर्यपर्याया मीरपारप्रवाहिणी ।
कमनीया मनोरम्या कामारिसुखशीतला ॥ ३०८

नगजा नगसंवाहा अनघा अचलप्रभा ।
नगजाह्लादगायस्था अचलार्गलसास्यगा ॥ ३०९

कुङ्कुमाङ्कितशोभा च कुसुमार्चनभासुरा ।
मङ्गलाङ्का शुभोत्तुङ्गा माधुर्यतमसुस्वरा ॥ ३१०

कविताप्रेरणा गङ्गा कवितार्षलयस्थिता ।
स्फूर्तिस्मेरसुवाक्श्रीश्च स्फूर्तिमूलमदम्बिका ॥ ३११

कविताभाससंभासा भासमानसुगङ्गिका ।
भास्करद्युतिशोभा च प्रालेयरश्मिमोहिनी ॥ ३१२

प्रत्यक्षकविताहर्षा कविताह्लादनादिनी ।
कविमानससंहर्षा काव्यामोदातिमोदिनी ॥ ३१३

यात्रापरमुदादर्शा क्लान्तिसंवाहमञ्जना ।
रात्रीशीलालना गङ्गा प्रातर्दृष्टिप्रसादिनी ॥ ३१४

अरुणोदयसुस्नाता सन्ध्यास्नानप्रशान्तिदा ।
ऊषप्रशान्तिसँल्लीना सायंसन्ध्याप्रशान्तभा ॥ ३१५

प्रागुषःस्नानसाह्लादा दीपावलिसुपूजिता ।
दीपज्योतिस्स्फुरा गङ्गा दौकूलाम्बरभामिनी ॥ ३१६

प्राक्सन्ध्यारागरागाभा कलधौतमयस्फुरा ।
ऊषावाच्यातिरम्याष्ट्रा नित्यमङ्गलसुस्वरा ॥ ३१७

स्नानपानपरागीता ध्यानतत्परसन्नुता ।
प्रवाहान्तरकाठस्थतथ्योपचारिणीनुता ॥ ३१८

उषोगानश्रुतिर्गङ्गा पक्ष्यनुस्वरमोदिनी ।
उषोगाराधिता गङ्गा ज्ञानेनोदयनादिनी ॥ ३१९

उषस्सङ्गीतरागा च अरुणोदयसस्मिता ।
भातशान्तिप्रसादा च गानाञ्जलिप्रसादिनी ॥ ३२०

श्रीत्यागब्रह्मसङ्गीतसत्कीर्तनौघवाहिनी ।
शिष्यापुष्पामुखश्रोत्री गुरुकीर्तननन्दिनी ॥ ३२१

दीक्षितानूतसङ्गीतमीनाक्षी अन्नपूरणी ।
दीपावलिदिनामुक्तसिद्धदीक्षितसंस्तुता ॥ ३२२

श्रीदीक्षितकृतिश्रोत्री श्रीचक्रमध्यदैविका ।
सिद्धिप्रसादवीणादा काशीक्षेत्रसुसंभवा ॥ ३२३

दीक्षिताञ्जलिहस्तोदा सिद्धिपूर्णप्रसादिनी ।
हस्तोदकसुवीणा च वीणानादप्रमोदिनी ॥ ३२४

गङ्गा गिरीशशीर्षस्था गम्भीरगायगामिनी ।
तीर्थमूला कृपालुश्च खेलगा जह्नुबालिका ॥ ३२५

ध्यानस्था वरपानस्था गानस्था नुतिगीतिका ।
ज्ञानदीपप्रदीपा च नुतिदीपावलिस्फुरा ॥ ३२६

अरुणोदयपिञ्जारा सहस्रार्चिस्स्फुरत्प्रभा ।
तारपारजतेजा च द्युतिलासविलासिनी ॥ ३२७

सलिलात्यूषसंहर्षा नेमदीपावलिस्मिता ।
शिशिराशिरसंशोभा हेमदीपस्फुरज्ज्वला ॥ ३२८

मेघदीपाभमेघा च गीतदीपावलीसुभा ।
रागदीपाभरागा च धीदीपस्फुरदीपिका ॥ ३२९

गीतमाता नदीमाता लोकमाता सुरूपिणी ।
श्रीमाता प्रेष्ठधीमाता मातृगङ्गा नमस्कृता ॥ ३३०

पूर्णसूर्यग्रहास्नाता शतवर्षैकसंभवै-
-तदसाधारणावृत्तित्रिकालास्नातपावनी ॥ ३३१

अविस्मृतमहास्नाना सर्वपापविमोचनी ।
बहुजन्मकृताघौघसंविमोचनकारिणी ॥ ३३२

भविष्योद्धारिणी गङ्गा विश्वासाकम्पिताश्रया ।
एकभक्तैकसंश्राया मदम्बा मम तारिणी ॥ ३३३

अज्ञानतिमिराहन्त्री सुज्ञानसुरदीपिका ।
सज्ज्ञानमार्गसन्नेत्री पुनरावृत्तिवारणी ॥ ३३४

लोककर्दमसामीपा अलौकिकैकमोददा ।
संसारदुःखसंवाहा संसाररावसान्त्विनी ॥ ३३५

तापसान्ता तपोभान्ता मानसान्तःसुवासिनी ।
सत्त्वासक्तिसुसंप्राप्तिः सत्त्वातीतप्रशान्तिदा ॥ ३३६

नित्यनूतननव्या च आरोग्ययौवनावहा ।
संतप्तमतिशीता च तप्तचामीकरावरा ॥ ३३७

नित्यस्नानमनोवाहा नित्यानुभूतिसंस्तुता ।
नित्यनिष्ठापरागीता नित्यानन्दप्रवाहिणी ॥ ३३८

धनिनी विपुला गङ्गा अशिरा प्रचुरा चिरा ।
सदायाना महायाना शुभयाना चिरस्थिरा ॥ ३३९

उषानन्दशुभस्नाता माध्याह्नसंस्कृतस्तुतिः ।
उषःप्रशान्तिनिध्याता सन्ध्यास्नानपरानुता ॥ ३४०

उषःकान्त्यतिशोभा च दिवादिनमणिद्युतिः ।
ऊषर्कोंकारनादा च उषसीरागभालया ॥ ३४१

उषःकोकिलसङ्गीता गीतामोदप्रसादिनी ।
ऊषेन्द्रनीलजालाभा सायंस्वर्णाभभामिनी ॥ ३४२

प्रातःशान्तिमया गङ्गा सन्ध्यारागलसत्प्रभा ।
सौन्दर्यदेवता गङ्गा नेत्रोत्सवलसच्छविः ॥ ३४३

झल्लिकाच्छायपर्याया पञ्चमोभागभासुरा ।
पञ्चमस्वरसुश्राव्या पक्षिजालकलस्वरा ॥ ३४४

सन्ध्यारश्म्यतिशोभा च सन्धिप्रशान्तिसुस्वरा ।
चिदाकाशसुनीला च नीलखाभ्रबलक्षका ॥ ३४५

अष्टोत्तरशतस्नाता शतिनामजपस्फुरा ।
नामसङ्कीर्तनानूता नामगानलयस्थिरा ॥ ३४६

नादस्वररसारासा नादप्रशान्तिसान्त्वदा ।
नादार्थिहृन्नदानादा नादसात्मत्वसाधना ॥ ३४७

नामप्रभावसन्नादा नादानन्दसुनादिनी ।
नुतिनामसमष्टिस्था नामपुष्पासवस्रवा ॥ ३४८

पाषाणखण्डसन्नादमृदङ्गमृदुलध्वनिः ।
पक्षिसप्तस्वरोड्डीनाकाशमार्गसुगामिनी ॥ ३४९

आदर्शतलदर्शा च ईश्वरादर्शदर्शना ।
नीरवारवगाम्भीर्या सन्ध्यानीरवमाधुरी ॥ ३५०

सन्ध्यास्वर्णमया गङ्गा सूर्यरश्मिस्फुरज्ज्ला ।
सन्ध्यास्नानस्तुतागीता सन्ध्यादीपाभिपूजिता ॥ ३५१

बहुवर्णलसत्तोया सन्ध्यारागसुरागिणी ।
तरलोर्मिसुरङ्गा च चारुसौवर्णलासिनी ॥ ३५२

नीलस्वर्णस्फुरत्कान्तिर्विद्युत्प्रभाविलासिनी ।
सन्ध्यारम्यसमुल्लासा सन्ध्यारूपमनोहरी ॥ ३५३

चिन्तितादर्शिता गङ्गा स्नाता पीता सुकीर्तिता ।
सदाध्याता मदामोदा मनस्कूटा मयस्करी ॥ ३५४

तापितात्मश्रया गङ्गा तपोमानसजीवनी ।
जलजानन्दसानन्दा जलस्फूर्तिसुहेतुका ॥ ३५५

विषयासक्तिकूपाद्धिदूरात्मसुखदायिनी ।
दुर्गपाषाणपारा च अपारात्मलयावनी ॥ ३५६

संसाररावमध्यैकज्ञानकोकिलसुस्वरा ।
सारहीनैहिकप्रातिकूल्यातिसारसारका ॥ ३५७

जीवशक्तिस्फुरन्नीरा नीरस्फुरणभास्करा ।
जीवस्फुरणपारा च स्फूर्तिप्रेरणजीवना ॥ ३५८

जीवनाधारधारा च जीवनी नतजीवनी ।
जीवाधारसुनाडी च जीवधारसुजीवना ॥ ३५९

स्नानध्यानशमाधारा पाननामलयावहा ।
ध्यानज्ञानफलाधात्री गानतत्परसत्फला ॥ ३६०

सलिलात्यूषनैर्मल्या सतताश्वेतनिर्मला ।
हिमाद्र्यमृतसंवाहा वासुराहिमभासुरा ॥ ३६१

पर्जन्यश्यावधवार्यौघा पारोत्कूलप्रवाहिणी ।
वर्षश्वेतकुहेली च वार्षिलास्फटिकायुता ॥ ३६२

अतिवृष्ट्यतिवेगा च अतिचारुभयङ्करी ।
अतिचण्डमरुद्घूर्णा गङ्गा साष्टाङ्गवन्दिता ॥ ३६३

नानावैचित्र्यसौन्दर्या उड्डीनगुत्सशीकरी ।
धाराधवलगुत्सा च वायुवेगसुनृत्यका ॥ ३६४

वायुवेगा मनोवेगा कविवेगप्रवाहिणी ।
मनोवेगस्थिता गङ्गा मनोलालसपूजिता ॥ ३६५

नित्यनूतनवेला च नित्ययौवनशीतला ।
नित्यनूतनवाक्चेला नित्यनूतनवाङ्मयी ॥ ३६६

नित्यारम्यातिभव्या च सुभद्रा भद्रवाङ्मयी ।
काव्यानन्दातिसौवर्णा कविश्रेष्ठसुवर्णिता ॥ ३६७

वर्णनीया सुवाग्वर्णा वाग्वर्णपरिपूर्णका ।
वर्णवाग्वर्षवर्णा च वाग्वर्षपरितोषिता ॥ ३६८

वर्णनातीतसौवर्णा वर्णवाग्वर्षवर्णिनी ।
वर्णकावर्णरूपा च वर्णवाग्लासलासिनी ॥ ३६९

बहुवर्णलसद्भासा बहुरागतरङ्गिणी ।
ऋतुरङ्गविधारङ्गा विविधारङ्गरङ्गिणी ॥ ३७०

वसन्तग्रीष्मवर्षालुशरद्धैमन्तशैशिर-
-ऋतुपर्यायपर्याप्तरङ्गच्छवितरङ्गिता ॥ ३७१

ग्रीष्महैमक्षरासारा क्षरिद्धैरप्रवाहिणी ।
हैमन्ताच्छबलाहा च शरच्चन्द्रद्युतिस्फुरा ॥ ३७२

पिकानन्दवसन्ताघोषमिष्टस्वरपूरिता ।
गङ्गा रङ्गणसौरङ्गा मतितारागणस्फुरा ॥ ३७३

ग्रीष्मगौरप्रवाहा च वर्षपङ्किलवर्णिनी ।
हिमर्तुस्वच्छनीलाभा शुक्लपिञ्जारवाहिनी ॥ ३७४

प्रातर्धूसरखर्जूरा सीरगोगौरगैरिका ।
प्रदोषश्वेतनीला च नीलजीमूतसन्निभा ॥ ३७५

श्वेतनीला हरिच्छाया श्यामसुन्दरवर्णभा ।
कनकाङ्कलसद्रङ्गा सायंप्रशान्तिदीपिनी ॥ ३७६

सन्ध्यानीलप्रशान्तिश्च शुद्धनीला घनाघना ।
पिञ्जारकौशवस्त्राभा श्येता श्यामा सुरागभा ॥ ३७७

चित्ररङ्गतरङ्गा च गङ्गा रङ्गतरङ्गिणी ।
रयमध्यशिलारूढश्लक्ष्णपक्षिस्वरानुता ॥ ३७८

चन्द्रोदयातिरम्या च चन्द्रचन्द्रस्फुरच्छुभा ।
क्षीरोदसन्निभाशुक्ला तारासान्द्रस्मितप्रभा ॥ ३७९

सौवर्णा वर्णवाग्रासा सौवर्णवर्णलासिनी ।
रामा कृष्णा सुमेघा च घनाघनघनस्वना ॥ ३८०

वर्णस्फुटसुगाच्छाया कविवर्णनवर्णभा ।
वर्णवर्णनवर्णा च वर्णावर्णसुवर्णका ॥ ३८१

चेतोहरा सुहीरा च चारुगाचारुगामिनी ।
सलिलाद्भुतमाधुर्या स्मितस्मेरतरङ्गिणी ॥ ३८२

वर्णसंपूजिता माता वर्णापर्णावरावरा ।
वर्णजालसुहृद्धारा वर्णवर्णसुवर्णभा ॥ ३८३

रजताश्वेतमुत्या च शुद्धश्वेतसुशोभना ।
पिङ्गकौसुम्भवर्णाभा हिरण्याभतडित्प्रभा ॥ ३८४

हरीन्द्रनीलकान्तिश्च स्वच्छस्फटिककाहरा ।
हरितापिङ्गलाशोभा तप्तचामीकराकरा ॥ ३८५

इन्द्रचापच्युतावर्णा चन्द्रबिम्बलसत्प्रभा ।
वन्द्रशापविमोक्त्री च वन्द्रचित्ताब्जचन्द्रिका ॥ ३८६

श्वेताश्वेताचलानन्दा श्वेतमुत्यसुभूषिणी ।
श्वेताम्बराम्बराश्वेता सत्त्वश्वेतसुदिव्यभा ॥ ३८७

सौवर्णवर्णकोल्लासा शुक्लपिङ्गाशशोभना ।
अतिनीला हराभासा कंदर्पणप्रसन्नता ॥ ३८८

लोकसंतापसंवाहा तप्तजाम्बूनदानदा ।
रूपवर्णातिरिक्ता च वर्णप्रवाहवाहिनी ॥ ३८९

नीरस्फुरन्निशाराज्ञा उषोनिर्माल्यदर्शना ।
निर्माल्यदर्शनाभासा निष्कामपूजिकोद्धरा ॥ ३९०

कौशाम्बरधरा देवी कौशेयस्पर्शलालिनी ।
कौशेयाभातिदौकूला कौशेयहरिवर्णिनी ॥ ३९१

रजता मा रजोपोहा तमआवृतपाटिनी ।
रजस्तमोघविद्रावा रजतस्फुरभामिनी ॥ ३९२

शुद्धसत्त्वसुशोभा च सत्त्वानन्दप्रकाशका[3]।
हैमकौशेयसंभासा हैमदाहैमसज्ज्ञला ॥ ३९३

नीलश्यामघनाभासा श्वेतवर्णा हरिप्रभा ।
हरितापिङ्गशोभा च कौसुम्भपिञ्जराजरा ॥ ३९४

शोभामरकताभा च नीलाकाशसुदर्पणा ।
सलिलाकाशवर्णा च नीलवर्णहरिप्रिया ॥ ३९५

रङ्गवैचित्र्यरम्या च अत्यूषमृदुरङ्गिणी ।
तपनागमभाच्छाया दिनान्तबहुरङ्गिणी ॥ ३९६

---

[3]बहुव्रीहिः

वासराशिरभासा च वासुराशशिभासुरा ।
असमानबृहद्भासा कविमानसवासना ॥ ३९७

तापनातापशीता च तप्तमानसशीकरी ।
तापसार्चितवाग्देवी तपस्स्फूर्तिनिवेदना ॥ ३९८

गङ्गा दिव्यापगा देवी सदास्मृतवरानना ।
नानारूपा सुनाम्नी च नामतारकपावनी ॥ ३९९

चिद्रूपा रूपसानन्दा शुद्धका शुचिरूपिणी ।
हृद्गता मम त्रात्री च गुण्या गुणौघवाहिनी ॥ ४००

द्रुतगाङ्गेयका गङ्गा सौमेरुकोदकावनी ।
दान्तसंरक्षणा गङ्गा ज्ञानज्योतिःप्रदीपनी ॥ ४०१

तलदर्पणसंभासा तरुणारुणरश्मिभा ।
कलस्वरा स्वराभासा कलस्वरार्चितासुदा ॥ ४०२

तरङ्गावलिनीराभा निस्तरङ्गप्रशान्तिदा ।
तरङ्गरङ्गरङ्गाभा रङ्गशायिसुरागगा ॥ ४०३

नीररङ्गसुरागा च नीरस्मेरसुलक्षणा ।
नीरजानन्दवाग्धारा नीरजाह्लादगायना ॥ ४०४

क्लान्तिच्छिद्घनगाना च श्रान्तमानससान्त्विनी ।
श्रितानन्यैकसौख्या च श्रुतोंकारसुनादिनी ॥ ४०५

जीवनाजीवनागम्या जीवजीवनजीवनी ।
जीवनानन्दजीवा च जीवनामग्ननन्दिनी ॥ ४०६

जीवनासक्तिजीवा च आजीवनार्ह्यवत्सला ।
आजीवजीवनास्नानलालसापूरसत्सला ॥ ४०७

चारुका चारुपर्याया चारुहाससुलासिनी ।
चारुवैचित्र्यलावण्या चारुगोत्रसुगोत्रिणी ॥ ४०८

सहस्रार्चननामाभा नामसारातिसारका ।
सहस्रश्लोकवाग्वर्षा सहस्रायुतवाचिका ॥ ४०९

हरिदश्वस्फुरा गङ्गा सहस्रार्चिसुतेजसा ।
सहस्रायुतदोषघ्नी सहस्रश्लोकभासुरा ॥ ४१०

हरिनामसहस्राभा हरिभक्तिसुमार्गिणी ।
हरिपादोदका गङ्गा हरिद्वारविलासिनी ॥ ४११

हरिद्वारमहोत्साहा हरिनामसुलासिनी ।
हरिभक्त्यावहा गङ्गा हरिसात्मीकराधरा ॥ ४१२

हरिनामसहस्नाता हरिद्राकुङ्कुमार्चिता ।
हरिकारुण्यवेगौघा हरिपूजनपूजिता ॥ ४१३

हरिनामसुमप्रीता हरिमाधवनामगा ।
हरिकेशवगोविन्दनामसङ्कीर्तनावहा ॥ ४१४

नेत्रपूरणपूरौघा नेत्रानन्दसुरूपिणी ।
मनःपूरणपूर्णौघा मानसस्थिरगामिनी ॥ ४१५

उषस्स्नाता सुसङ्गीता सायंदीपसुमार्चिता ।
दीपाभारुग्मसंभासा सन्ध्यारतिसुवैभवा ॥ ४१६

सन्ध्याभाराधिता गङ्गा सन्ध्यादीपस्फुरावरा ।
सन्ध्यासुरागसङ्गीता सन्ध्यारागातिदेवता ॥ ४१७

भक्तिदीपस्फुरत्स्वर्णा सन्ध्यारागातिरागिणी ।
हरिद्वारसुवैशाल्या क्षिप्रातिसुखदायिनी ॥ ४१८

चलदीपावलीदीप्रा नित्यदीपावलिस्फुरा ।
सलदीपावलीरागा रागदीपालयस्तुता ॥ ४१९

दीपाभाशोभिता गङ्गा ज्ञानाकाशप्रदीपिनी ।
बहुरागलसद्भासा दृष्टमात्रप्रहर्षदा ॥ ४२०

हरिनामसुमस्यूमा नामपुष्पाभिपूजिता ।
परिप्लाव्यसुधाप्लावा तमोमलिनधावनी ॥ ४२१

हरिरश्मिमुदास्नाता अतिवेगाभिनन्दिनी ।
हर्षाविस्मृतभूतिश्च रात्रीस्नानातिमोदिनी ॥ ४२२

राजभाराजराजौघा राजमानशुचिस्स्फुरा ।
राजाधिराजपूजा च भूजापूजितसुप्रभा ॥ ४२३

हरिनामस्मरास्नाता हरिकारुण्यवाग्वहा ।
हरिसङ्कीर्तनावाहा हरिदासनुतिस्फुरा ॥ ४२४

हरिनामस्वरागीता हरिनामसुमाधुरी ।
हरिहारिगुरुप्रीता त्यागब्रह्मसुवाग्वहा ॥ ४२५

नादानन्दपयोवाहा नादोपशमकारिणी ।
नादाहृतहरिद्वारा नादवैशाल्यवाहिनी ॥ ४२६

नित्यानधिकमाहात्म्या नित्यनिःसीमवैभवा ।
भुक्तिमुक्तिप्रदा गङ्गा भक्तिदा भक्तिसेविता ॥ ४२७

यात्रासंतापिताह्वाना पांशुपटलधावनी ।
कर्मानुबन्धधावा च मोक्षमार्गप्रदर्शिनी ॥ ४२८

मलिनैहिकनिर्णेका मनोम्लान्युपमार्जना ।
माता गङ्गा मदाश्राया प्रसत्त्यच्छपरीवहा ॥ ४२९

वाक्पुष्पावलिसंशोभा वाक्सुमाराधिता सिता ।
वागर्था वाक्सुजाला च वागौघा वरिवस्यिता ॥ ४३०

उषोदीपावलिस्नाता सन्ध्यादीपावलिस्फुरा ।
नित्यस्नानोत्सवा गङ्गा नित्यसन्ध्यासुदीपभा ॥ ४३१

महामकरसंक्रान्तिप्रागुषस्स्नानवैभवा ।
सूर्यचन्द्रग्रहास्नाता सर्वकालनिमज्जना ॥ ४३२

प्रतिद्वादशवर्षैककुम्भमेलामहोत्सवा ।
सहस्रायुतसन्न्यासिगणसेवितसुस्थला॥ ४३३

यात्रासार्थायुतस्नाता बृहदुत्सवतीर्थखा ।
आचारजीवनाडी च बहुमानितखापगा ॥ ४३४

सर्वकालजनास्नाता सर्वकालपयोभरा ।
सर्वकालाविकल्पा च सर्वकालरुचिस्फुरा ॥ ४३५

वेगावरोधवेगा च मनोवेगावरोधका ।
विक्षेपमलिनाधावा स्पर्शनाशीतगङ्गिका ॥ ४३६

निस्तरङ्गमनोरङ्गा तरङ्गाभामनोहरी ।
पुण्या पुलकदा गङ्गा सर्वलोकमुदाददा ॥ ४३७

सुबला दुर्बलापोहा दुःखनिर्वृत्तिकारिणी ।
मनोबला निरामर्षा देहारोग्यप्रवर्धिनी ॥ ४३८

लोकनाटकसंदर्शा अलौकिकैकसाक्षिणी ।
अलौकिकाद्भुतानन्दा लोककर्दमधावनी ॥ ४३९

अक्षीणामृतवारिश्च शाश्वतीयाभिनव्यता ।
स्वानुभूतातिपूतिश्च शाश्वतीवहशाश्वती ॥ ४४०

नवनव्यप्रवाहा च नवनव्यसुकाव्यगा ।
सुलभावर्षसुश्लोका कविमानससौष्ठवा ॥ ४४१

अशोषकविरीतिश्च शोषमानसतोषिणी ।
कवितालास्यसँल्लासा तोषोल्लाससुपोषिणी ॥ ४४२

नित्यस्तोत्राभिगीता च नित्यानुरागसन्नुता ।
नित्यनव्यसुकाव्यश्रीर्नित्यनव्या निरोधहा ॥ ४४३

नित्यकोलाहला गङ्गा नित्यत्वव्यक्तरूपिणी ।
नित्यदर्शनसंप्राप्तिर्नित्यानित्यत्वबोधिनी ॥ ४४४

नित्या निरामया देवी सत्यानन्दचिदात्मनी ।
मिथ्यामध्यैकसत्या च तथ्यवाक्स्तुतमातृका ॥ ४४५

सत्त्वार्थिहृत्स्थिरा गङ्गा सत्त्वसंस्फूर्तिदायिनी ।
सत्त्वसङ्गा नगोत्सङ्गा त्यक्तसङ्गैकसङ्गिनी ॥ ४४६

शैलोत्सङ्गप्रवाहा च शैलावतीर्णसुन्दरी ।
सर्वलोककृपावाहा समभूमिप्रवाहिणी ॥ ४४७

भद्रसोमा अपांश्रेष्ठा लोकोद्धारावतारिणी ।
लोकसंतुष्टिदात्री च पावनी पापधावनी ॥ ४४८

स्वादुपर्यायपायौघा स्वादुनादौघवाहिनी ।
स्वोवसीयसमागङ्गा स्वीकृतस्वादुगानगा ॥ ४४९

भद्रवाग्वर्षसंसिक्ता संसिक्तानन्दमिष्टता ।
मानसापूजसंतुष्टा सङ्गीतभक्तिवाक्स्थिता ॥ ४५०

चित्तपूर्णपयःपूरा चिन्तनावाहवाहिनी ।
चिन्तनावाहवाहा च चिन्तनाबाधशामनी ॥ ४५१

चित्तरन्ध्रस्फुरद्दीपा चिच्छत्त्युत्तेजना शिवा ।
चित्तदीपस्फुरन्नीरा चिदानन्दा चिरस्थिता ॥ ४५२

तापनीयातिकान्तिश्च तापापोहनतामरा ।
तापसान्तस्सुसञ्चारा तपस्तेजोभिवर्धिनी ॥ ४५३

पौनःपुन्यनुतास्नाता सुखावहसुखावहा ।
वाक्सला वत्सला गङ्गा सलसम्भाससद्रसा ॥ ४५४

चलाचलाचला गङ्गा चलचित्तस्थिरकरा ।
जलरूपा जलावाहा जलजानन्दकारका ॥ ४५५

यमुनासङ्गता गङ्गा अधोयुक्तसरस्वती ।
त्रिवेणीसङ्गमाहात्म्या तीर्थराजप्रयागभा ॥ ४५६

यमुनागाढनीला च मृत्तिकावर्णगङ्गिका ।
समविस्तीर्णसंवाहा प्रयागोपमसागरा ॥ ४५७

गङ्गा स्वभावसंशीता चण्डप्रचण्डवेगिनी ।
यमुनानुष्णशान्ता च गङ्गीभूतहरिप्रिया ॥ ४५८

त्रिवेणीसङ्गमागङ्गा त्रिलोकानन्ददायिनी ।
त्रिगुणातीतसत्या च त्रितापार्तिप्रशामनी ॥ ४५९

दर्शनानन्दपुण्या च देवदर्शनतुष्टिदा ।
देवतासार्वभौमी च गङ्गा दर्शनमुक्तिदा ॥ ४६०

पुण्यस्नानसुपाना च बहुलस्नातसुस्थला ।
परातिदूरसङ्गा च नौकाप्राप्यनिमज्जना ॥ ४६१

सूर्यास्तवर्णसंभासा द्रवसौवर्णरङ्गिणी
कौसुम्भारुणपिञ्जारा बहुवर्णलसत्सला ॥ ४६२

सायंसन्ध्याप्रशान्तिश्च चारुलास्यतरङ्गिणी ।
सन्ध्यास्नानकृपावाहा सन्ध्याध्यानलयावहा ॥ ४६३

अतिविश्वाससस्नाता अतिप्रेमसहानुता ।
अतिप्रेष्ठवराधात्री अतिसौमङ्गलावहा ॥ ४६४

नवनव्यकविस्फूर्तिनवनव्यरुचिस्फुरा ।
नवनव्यसुपानीया नवरात्रीसुपूजिता ॥ ४६५

शुष्कमानससंपूर्णा पूर्णेन्दुवक्त्रभामिनी ।
शुद्रा[4] स्वर्गोदका गङ्गा सूकरावतरस्तुता ॥ ४६६

सङ्क्रान्तिकुम्भमेलासुमहोत्सवकुतूहला ।
सन्न्यासिजनसङ्घातस्नानकोलाहलस्तुता ॥ ४६७

[4]शोकः द्रावति यया सा

पौर्णमावास्यसंगाढा सूर्यचन्द्रग्रहाप्लुता ।
सदायात्रिगणस्नाना विशेषदिनवैभवा ॥ ४६८

गङ्गा गमनलावण्या श्रमापोहपरीवहा ।
सर्वकालमनोरम्या शरतारभवायना ॥ ४६९

प्रयागबहुविस्तीर्णा दूरमार्गप्रवर्तनी ।
काशीपुरपुराणी च बहुलोद्धारपावनी ॥ ४७०

पुण्यकाशीमहाक्षेत्रा दक्षिणोत्तरवाहिनी ।
वरुणासीसुमध्यस्था महास्नानविमोचनी ॥ ४७१

दशाश्वमेधयागानां समष्टिफलदायिनी ।
विश्वनाथाभिषेकाम्बा काशीक्षेत्रयशस्विनी ॥ ४७२

विश्वेश्वरप्रिया गङ्गा विश्वेश्वरस्तुतिप्रिया ।
विश्वरूपा विशालाक्षी विश्वसंरक्षणावनी ॥ ४७३

अन्नपूर्णा जगन्माता सुसान्निध्यसनातनी ।
काशीपुरमहापुण्या जीवोद्धारणपूरणी ॥ ४७४

काशीक्षेत्रशिवानन्दा शिवरामसुनामगा ।
मोक्षानन्दप्रसादा च गङ्गा परमपावनी ॥ ४७५

शिवारामा शिवारामा शिवराममनस्विनी ।
उमारामशिवारामा रमारामरमाप्लवा ॥ ४७६

मावरोमावरामोदा मा वरा मानसार्चिता ।
नुत्यारामा नुतारामा रामनामसुमार्चिता ॥ ४७७

रामनामरसाप्लावा नामतारकतारिणी ।
श्रीरामनामसंमिश्रा नारायणकृपावहा ॥ ४७८

केदारेश्वरसान्निध्या गौरीकुण्डातिपावनी ।
शिवाभिषेकतीर्था च त्रिकालस्नानमोचनी ॥ ४७९

मनोजवैरिलिङ्गार्चारूपाभिषेचना शिवा ।
मनोजपूजिता माता मनोजापूजनप्रिया ॥ ४८०

मनोजरूपसंवाहा मनोजपुत्रपादका ।
मनोजपुष्पमाला च मनोजामोदमण्डिता ॥ ४८१

मनोजावस्थिता माता मनोजावस्थशामनी ।
मनोजवेगवेगा च मनोजवेदनौषधी ॥ ४८२

मनःश्रान्त्यपवाहा च क्लान्तिच्छेदनसुस्पृशा ।
मनःशान्त्यभिवाहा च मनःपुष्पार्चनस्तुता ॥ ४८३

मनःक्लेशार्चिता गङ्गा क्लेशितैकान्तमानसा ।
मनोगता निरातङ्का मनआतङ्कपूजिता ॥ ४८४

शून्यमानसपूरा च निराकांक्षातिकांक्षिता ।
नैराश्यापोहना गङ्गा नैश्चिन्त्यसुफलप्रदा ॥ ४८५

दैविका दैवसंप्रीता दैवत्यफलदायिनी ।
वेदवाक्यमहत्सारा वेदवेद्याभिवादिनी ॥ ४८६

गङ्गा सततनैर्मल्या मनोनैर्मल्यसङ्गता ।
त्रैलोक्यातीतसौरूपा त्रिगुणातीतसौख्यदा ॥ ४८७

कलिकल्मषनाशा च कल्यार्तिशमनावहा ।
कलिपुण्यकरा गङ्गा कलिशोकनिवारिणी ॥ ४८८

कलिमानवसुश्राया कारुण्यौघपरीवहा ।
कलिदोषनिवारा च कलिप्रत्यक्षदेवता ॥ ४८९

कलाधरा कलाधारा कलिकालुष्यहारिणी ।
कलहंसा कलाभासा कलाधरमहाद्युतिः ॥ ४९०

कालभीत्यपहा गङ्गा कालान्तकप्रिया कला ।
काली कनकधारा च कालकालाभिषेकका ॥ ४९१

हिमशृङ्गोद्भवा गङ्गा हिमोत्सङ्गप्रवाहिणी ।
हिमोपशल्यवाहा च समभूबहुदूरगा ॥ ४९२

हरिद्वारा प्रयागा च काशीकलुषहारिणी ।
प्राच्यवङ्गागता गङ्गा समुद्रप्रतिगामिनी ॥ ४९३

लोककूपनिमग्नानां चित्तागोचरज्ञानिनी ।
विरक्तासक्तभक्तानां चित्तगोचरज्ञानिनी ॥ ४९४

पराह्लादा परंहंसा श्रीरामकृष्णसेविता ।
ब्रह्मनिष्ठातितुष्टिश्च तुष्टिवृंहणमावरा ॥ ४९५

श्रीरामकृष्णसद्ध्यानपारा गङ्गा परावरा ।
परब्रह्मपयोरूपा पारावारपरायणा ॥ ४९६

श्रीरामकृष्णनिध्यातकाली गङ्गा कलारवा ।
श्रीरामकृष्णसान्निध्यपरायणपरापरा ॥ ४९७

सुकुमारी प्रवृद्धा च प्रवृद्धश्रीमती धनी ।
सौलभ्या दुर्लभा दिव्या दुर्गा दुर्गनिवारिणी ॥ ४९८

सागरापारवैशाल्या गङ्गासागरसङ्गमा ।
बहुस्रोतःप्रवाहा च धाससी सागरायुता ॥ ४९९

बह्वासरजलादुग्धा भयानकहिमापगा ।
गङ्गा भङ्गनया माता भयापोहा भवापहा ॥ ५००

आह्लादकारिणी गौरी काली घोरा सुरूपिणी ।
हूग्ली पद्मा सुनाम्नी च मेघना सागरायुता ॥ ५०१

सिन्धुपर्यायपायौघा सिन्धुवैशाल्यलासिनी ।
सिन्धुजाह्लादभङ्गी च ह्लादिनी सिन्धुगामिनी ॥ ५०२

गङ्गा गगनसिन्धुश्च रसवाहा रसार्णवा ।
अगनागगलासारा वगलाभरणापगा ॥ ५०३

अगवाहा अधोवाहा समवाहा समुद्रगा ।
आघूर्णा अतिचण्डा च शमवाहा तरङ्गिणी ॥ ५०४

महीधरमहाप्लावा समभूमिपरीवहा ।
महोदधिसमाश्लिष्टा गङ्गासागरसंयुता ॥ ५०५

सागराभेदमागङ्गा रागलास्यतरङ्गिणी ।
सागराश्लिष्टसंतोषा गङ्गा सागरसँल्लया ॥ ५०६

गोमुखावतरा गङ्गा गङ्गासागरसङ्गमा ।
गोमुखीव्यक्तरूपा च सागराव्यक्तरूपिणी ॥ ५०७

धरणीधरसंभावा धरणीप्लवसङ्गमा ।
धरीभूतसुधाप्लावा लवणाब्धिसमिश्रिता ॥ ५०८

कूवाराभिन्नसंमिश्रा कूवारभिन्नसज्जला ।
कूवारवारिभावा च विलावण्यातिमाधुरी ॥ ५०९

सागरालक्ष्यरूपा च सागरापररूपिणी ।
श्वेतद्वीपमनोरम्या वार्षिक्यमेलविश्रुता ॥ ५१०

अब्ध्यैकीभूतकंश्रेष्ठा श्रेष्ठैकतत्त्वदर्शिनी ।
एकवस्तुप्रमाणा च एकतथ्यप्रबोधिनी ॥ ५११

अभिध्यानचिदाभासा एकतत्त्वप्रकाशिनी ।
अभिध्यानमनोलीना व्यक्तैकवस्तुरूपिणी ॥ ५१२

एकवस्तुनदीरूपा एकवस्तुजलाशया ।
एकवस्तुस्फुराभासा एकवस्त्वपरालया ॥ ५१३

व्यक्ताव्यक्तैकसद्वस्तुतत्त्वातिसूक्ष्मदर्शिनी ।
परावरविबोभुवत्परब्रह्मस्वरूपिणी ॥ ५१४

अद्वैततत्त्ववाक्यार्था द्वैताद्वैतविशिष्टता ।
जीवब्रह्मैक्यसद्बोधा सज्ज्ञानस्फूर्तिदीपिनी ॥ ५१५

समुद्रराजसंयुक्ता गङ्गा मनस्समुद्रगा ।
समुद्ररूपसान्निध्या समुद्रालयदैविका ॥ ५१६

समुद्राभा पयःपूरा अब्धिवैशाल्यगामिनी ।
समुद्राधोगतोद्धारा गङ्गानघाघनाशिनी ॥ ५१७

अवाच्यानन्दसंपूर्णा वाग्वासिता सुवासिनी ।
सर्वकालसमुल्लासा सर्वदा सर्वतोमुखी ॥ ५१८

भवसागरपारा च भावानन्दप्रकाशिनी ।
भवभावसुभावा च भावाभाववरप्रदा ॥ ५१९

इहसागरतारा च परानन्दसुमार्गिणी ।
भावसागररागा च रागानुरागसागरा ॥ ५२०

स्वरसागरसङ्गा च स्वरसानुविलीनता ।
स्वरसागरगारागा स्वरपुष्पार्चनस्तुता ॥ ५२१

हिमाद्रिभाविता गङ्गा हिमगा सागरालया ।
विशालसागरागुप्ता सागरश्रुतिसँल्लया ॥ ५२२

हिमाद्रिव्यक्तरूपा च अब्धिगुप्तसुरूपिणी ।
समुद्रतीरनिध्याता स्नानपानातिसत्फला ॥ ५२३

समुद्ररूपसामीपा नदीरूपविदूरगा ।
नदीनादातिदूरा च समुद्रस्वरनर्दना ॥ ५२४

हिमशैलोद्भवा गङ्गा समसागरसालया ।
हिमोद्भूतस्तुतिस्तोमसहस्रार्पितसागरा ॥ ५२५

बहुदूरहिमाप्लावा बहुसामीप्यसागरा ।
बह्वीप्सितजला गङ्गा बहुशीघ्रप्रसादिनी ॥ ५२६

ब्रह्मैक्यलीनतत्त्वा च ब्रह्मानन्दमयालया ।
ब्रह्मलीनतपस्तीर्था ब्रह्मस्थूलशरीरका ॥ ५२७

अद्वितीयापरानन्दा अद्वितीयापमाहिना ।
अधस्था हिमशीर्षस्था समस्था सर्वगामिनी ॥ ५२८

आर्द्रोपनिषदासारा आर्द्रहृत्सागरालया ।
अदृश्यादृश्यरूपा च दृश्यादृश्या स्तुतिस्फुरा ॥ ५२९

वेदसारासुधीसारा हृत्स्थिता मा वरालया ।
मोदसारानदासारा तत्त्वरूपा समुद्रगा ॥ ५३०

बोधसारातिसत्सारा रागरूपा स्वरालया ।
नादसारा सुधासारा भद्ररूपा लयालया ॥ ५३१

योगसारा महासारा सत्त्वरूपा चिरस्थिरा ।
रागसारा जलासारा सत्यरूपा शुचिस्स्फुरा ॥ ५३२

घोररूपा सुलावण्या शान्तिरूपा शमावहा ।
सत्सुरूपाविरूपा च ज्ञानरूपा सुदर्शना ॥ ५३३

मायासागरतारा च मायाभ्रान्तसुमार्गिणी ।
मायापाटनिपाटा च मायातीतस्वरूपिणी ॥ ५३४

मायातीतप्रशान्तिश्च मायादारिघृणाकरी ।
मायामध्यैकतथ्या च तथ्योपचारकीर्तिता ॥ ५३५

मायास्वप्नविनाशा च मायाविकरुणावहा ।
मायारहितपुण्योदा मायातत्त्वप्रकाशिनी ॥ ५३६

सत्यवाक्संस्थिता माता सत्यासत्यविभेदिनी ।
सत्या सत्यसुरूपा च सत्त्वासत्त्वप्रबोधिनी ॥ ५३७

सत्यज्ञानमयी देवी मिथ्याज्ञानावघट्टना ।
मिथ्यापारैकतथ्या मा तथ्यानुरागसंस्कृता ॥ ५३८

स्वीकृतस्तुतितथ्या च तथ्यमानसपूरणी ।
सत्यवाक्स्तुतिसत्या च सच्चिदानन्दरूपिणी ॥ ५३९

भक्तिवागर्थसत्सारा संयताञ्जलिसन्नुता ।
संस्कृत्याधारनाडी च भावनारागसम्मुदा ॥ ५४०

शक्तिरूपा सुसत्त्वा च शक्तिदा शक्तिशालिनी ।
ज्ञानार्थिध्यानगम्या च गानाञ्जल्यतिमोदिनी ॥ ५४१

निष्कामकर्मसंतोषा कर्मबन्धनभेदिनी ।
धर्मार्थकाममोक्षा च नैष्कर्म्यसिद्धिदायिनी ॥ ५४२

काममोहापहा गङ्गा सत्कामकामपूरणी ।
अकामकामिसत्कामा काव्यहृत्कामकामिनी ॥ ५४३

भारताचारसंमिश्रा कलाधारसुजीवनी ।
भारतामोदगर्वा च भारती भारलाघवा ॥ ५४४

नर्मदासिन्धुकावेरीसर्वतीर्थस्वरूपिणी ॥
सर्वोत्कृष्टशुचिस्सर्वा सर्वानन्दसमन्विता ॥ ५४५

नेत्रानन्दसुदृश्या मा दर्शनाह्लादगामिनी ।
श्रोत्रानन्दसुगाया च पूर्णा पूर्णत्वदायिनी ॥ ५४६

क्षरान्तस्थाक्षरा गङ्गा क्षीरधारमनोहरी ।
क्षारोदधियुतक्षीरा क्षीरसागरसान्निधा ॥ ५४७

गङ्गामाता नभस्तीर्था कालगत्यैकसाक्षिणी ।
वायुरूपापरूपा च सर्वरूपा मदाहरा ॥ ५४८

एकानेकसुरूपा च जलरूपधराझरा ।
अनेकरूपसर्वस्था जलरूपसुहृत्स्थिरा ॥ ५४९

अपर्याप्तानुभूतिश्च पर्याप्तात्मसुखावहा ।
सृष्टिपर्यायव्यक्तिश्च सृष्टितत्त्वप्रदर्शिनी ॥ ५५०

संसारसागरारावमध्यैकक्षणनीरवा ।
नीरवारामरामा च नीरवोद्भवगारवा ॥ ५५१

गोमुखारम्भरीतिश्च हिमजा सागरायणा ।
गङ्गासागरविश्रामा इहमोक्षपरायणा ॥ ५५२

गङ्गा मय्येप्सिता माता मल्लालसामनःस्थिता ।
मन्दस्मितसमुल्लासा मनस्तोयालयालया ॥ ५५३

मदालम्बा मदम्बा च मच्चित्तपरिपूरणी ।
मनोलयावहा गङ्गा मनआलयदैविका ॥ ५५४

श्रवणाद्भुतनाम्नी च मननाहूतमातृका ।
स्वानुभूतिसुसङ्गीता स्वानुभूतमदम्बिका ॥ ५५५

बहुदूरस्थिता गङ्गा लघुदर्शनभाग्यदा ।
मृदुलस्वरगीतस्था मद्भावपरिपूजिता ॥ ५५६

वागर्थजालचेला च वागर्थधारवाहिनी ।
वाक्पुष्टिनृत्यसङ्गीता वाक्तुष्टिवरदायिनी ॥ ५५७

ज्ञानवाग्जालवर्षा च गानवाग्वर्षवाहिनी ।
मानसोल्लाससद्दर्शा मानसा मानसस्तुता ॥ ५५८

शब्दसुस्वरमाधुर्या शब्दातिमधुरावहा ।
शब्दब्रह्ममयी देवी सुशब्दस्तोममातृका ॥ ५५९

शब्दाक्षरविलीना मा शब्दसुस्वरसँल्लया ।
शब्दाक्षरप्रवाहा च सुशब्दस्वरसार्चिता ॥ ५६०

शब्दसंतापसंहारा शब्दव्यथोपशामनी ।
शब्दावृत्तिबहिष्कारा शब्दजालविमोचनी ॥ ५६१

दुःशब्दतापविद्रावा प्रत्यहाध्यार्तिहारिणी ।
सुषुप्तिरोधशब्दार्तिशामनी प्रशमावनी ॥ ५६२

विरक्तिदायिनी नेत्री विरक्तासक्तिपूजिता ।
विरक्तासक्तिसुश्लोका विरक्तासक्तिमानसा ॥ ५६३

रक्तानुरागसन्नूता रक्तमानससुस्वरा ।
निःसङ्गानुतसत्सङ्गा निशान्तात्मसुखावनी ॥ ५६४

नम्या नमस्कृता गङ्गा नतमानसतोषिणी ।
सुधागानसुधाप्लावा मातृगङ्गा मनस्विनी ॥ ५६५

सर्वाधिनाशिनी देवी सद्गुर्वाशीकरावनी ।
निःसंशयस्तुता गङ्गा सर्वसंशयभेदिनी ॥ ५६६

सदानन्दा मुदावाहा मदाह्लादप्रवाहिणी ।
सदास्मरमनोजस्था चिदानन्दशुभप्रदा ॥ ५६७

जीवैकलक्ष्यसद्बोधा जीवशक्त्यैक्यकारिणी ।
जीवतत्त्वानुभूतिश्च जीवसन्नुतिजीवनी ॥ ५६८

शोषमानससंतोषा शोषितैकाकिमानसा ।
मनःप्रसत्तिदात्री च प्रसन्नमनआलया ॥ ५६९

अभीक्ष्णतत्त्वसंदृश्या अभीष्टवरदायिनी ।
अभिक्षणस्मृतादृष्टा अभीतित्वप्रदायिनी ॥ ५७०

तमोनिद्रारिसत्त्वोदा सत्त्वाभासविकासिनी ।
मनोनैश्चिन्त्यभावा च भावनैश्चल्यपूजिता ॥ ५७१

साध्वीमनःस्थिता गङ्गा साध्वीमनःस्थलावहा ।
स्वादुपेयपयःपूरा साध्वीस्वादुफलप्रदा ॥ ५७२

स्वतन्त्रा स्वच्छरूपा च स्वतन्त्रत्वप्रदायिनी ।
परतन्त्रनिवारा च परत्वज्ञानमार्गिणी ॥ ५७३

विषादौषधपानीया रोगशोकनिवारिणी ।
स्नानपानस्मृता गङ्गा शिशिरा तापहारिणी ॥ ५७४

न्यूनधीपूर्णकारा च ज्ञानदा राद्धिवृद्धिदा ।
नूनं गोप्त्री सुरक्षा च निष्ठापराभिरक्षणा ॥ ५७५

भक्तिवैराग्यनिर्माल्यमानसोत्सङ्गवाहिनी ।
भगवन्नामसद्धानमानसोल्लासवाहिनी ॥ ५७६

आकांक्षितहिमस्पर्शा अतिकांक्षितकासुखा ।
सदान्तःचक्षुआदृश्या बहिर्दर्शनसत्सुखा ॥ ५७७

ममकारनकारा च अहंकारविदारिणी ।
सर्वोत्कृष्टप्रशान्तिश्च शुद्धचैतन्यलीनता ॥ ५७८

भ्रान्तिसंहारिणी गङ्गा भ्रान्ताश्रितातिसौभगा ।
श्रान्तचित्तस्तुता माता श्रान्तिसंवाहनापगा ॥ ५७९

कामक्रोधहरा गङ्गा लोभमोहविनाशिनी ।
मदमात्सर्यहा माता षट्शत्रुसूदनी दनी ॥ ५८०

सुमनोलयवाग्वाहा मनोमौनाचलस्थिता ।
मौनात्मलयसङ्गीता आत्मविश्वाससन्नुता ॥ ५८१

माता गङ्गा महापूता महापापप्रणाशिनी ।
महाविद्याप्रवाहा च महाप्रणवनादिनी ॥ ५८२

ज्ञानमौनलया गङ्गा ज्ञानानन्दप्रवाहिणी ।
गानसौमङ्गलाधात्री ध्यानसत्स्नानकावनी ॥ ५८३

अज्ञानापोहना गङ्गा शुद्धज्ञानप्रकाशका[5]।
सज्ज्ञानतेजना माता अद्वैतसिद्धिदापरा ॥ ५८४

प्रातःस्मृता दिनस्मृता सन्ध्यास्मृता सदास्मृता ।
मनःस्नातेहितस्नाना स्नानातिपूतचिन्तना ॥ ५८५

ध्यातव्याधिकपावित्र्या ध्यानस्नानफलावहा ।
ख्यातव्या महिमानीया ख्यातिदा ज्ञानवर्धिनी ॥ ५८६

भवायनार्तिसंतापहारिणी सहचारिणी ।
सदासहचरी माता अतिकांक्षासुपूरणी ॥ ५८७

इहजीवनसंत्राणा परलोकभयापहा ।
निर्वाणनिजसौख्या च नैजस्तोत्रसमर्पिता ॥ ५८८

बहुदूरप्रवाहा च अविदूरा मनश्चरा ।
बहुरागलयालासा अतिदूराभिवन्दिता ॥ ५८९

युक्तमानससन्नूता मानसायुक्तमावरा ।
तृप्तसुज्ञानसत्कामा नीतसुज्ञानतत्परा ॥ ५९०

सन्मार्गगामिका गङ्गा सत्सुखावहमातृका ।
सौभाग्यदायिनी देवी दिव्यानुभवगीतिका ॥ ५९१

---

[5]बहुव्रीहिः

मानसाभासलासा च भासमानजलस्मिता ।
प्रकृत्यखण्डविस्तीर्णा तीर्णसंसारसागरा ॥ ५९२

रामभक्तगुरुस्वामिसाक्षात्कारप्रसादिनी ।
गुरुसत्कीर्तनावाहा गुरुसत्त्वगुणप्रिया ॥ ५९३

गुरुगानसमाह्लादा गुरुकीर्तनसंयुता ।
गुरुगानसुवागर्था गुरुदर्शनसंवरा ॥ ५९४

पञ्चमीबहुलागीतदिव्यनामकृतिप्रिया ।
गुरुपूजासुपारा च गुर्वभिषेकसञ्जला ॥ ५९५

रामनामसुमाधुर्या वाक्शैलीशब्दनादिनी ।
नामाविरामगाना च नादान्तर्लयवाहिनी ॥ ५९६

रामाभिरामरामा च गानाभिरामरामका ।
रामनामरमारामा रामारामावरापगा ॥ ५९७

सुनादारामरारामा रामनामसुगानका ।
सुगानारामरामा च नामलासतरङ्गिणी ॥ ५९८

विश्रामरामगाया च नामविश्रामगामिनी ।
गायविश्रामगम्भीरा नामगानविलासिनी ॥ ५९९

रामनामस्थिरा गङ्गा नामध्यानसुमार्चिता ।
हरिनारायणानादनामपुष्पार्चनप्रिया ॥ ६००

सुवाग्रामा सुखारामा भवारामा भवायना ।
सुवागर्था सुनादार्था गानारामा मनोयना ॥ ६०१

मारमारमरामा च रामाविरामरामका ।
मारवैरिरमारामा रामारामाविरामका ॥ ६०२

नतारामा नदारामा नामाभिरामरागिणी ।
रामनामरसावाहा नामपेयूषतोषिणी ॥ ६०३

सदात्मारामनिध्याता ध्यानतत्परगोचरा ।
सदानन्दपरीवाहा सत्कामिचित्तहृत्स्थिरा ॥ ६०४

गेयराजस्तवावर्षा धान्तथान्तमयालया ।
यान्तभान्तनुता गङ्गा गुरुवाग्वर्षसालया ॥ ६०५

नादासक्तिमनोजीवा जीवशक्त्यैकजीवना ।
आधारश्रुतिजीवा च जीवनाधारसुस्वरा ॥ ६०६

सत्यवागर्चिता गङ्गा तथ्यानुरागवन्दिता ।
नित्यैकनियमागीता गीतनामातिसारगा ॥ ६०७

नित्यानुष्ठानसुस्नानध्यानगानसुपूजिता ।
नित्यमानसपुष्पार्चा स्वीकृतान्तर्लयार्चना ॥ ६०८

ब्राह्ममुहूर्तसङ्गीतश्रुतिरागलयावहा ।
प्राक्सन्ध्यास्मरणास्नाता प्रातःकालद्युतिस्फुरा ॥ ६०९

नुतिगीतसमष्टिस्था नुतानुता नुतिप्रिया ।
नित्यनूतनसत्स्तोमा नित्यनूतनवाग्वरा ॥ ६१०

सत्यानुभूतिवाक्सत्त्वा सत्त्वानुभवसारता ।
स्वोवशीयस्तुतिप्लावा स्वप्रभासस्तुतिप्लवा ॥ ६११

जाताजातापरा गङ्गा परानन्दप्रदायिनी ।
अजातानन्दजाता च अजातत्वप्रदायिनी ॥ ६१२

*मयेतिकीर्तिते गङ्गे अजातत्वं प्रदेहि मे ।*
*नाहमन्योपयुक्ताम्ब त्वद्भक्तिकीर्तनं विना ॥ ६१३*

*त्वत्पुत्रीकर्मसञ्चायमोचनं श्रेयसीगतिः ।*
*त्वत्कर्तव्यं हि मन्मातः त्वां विना नास्ति मे गतिः॥ ६१४*

*मदन्तःस्फुरणे देवि मज्जीवनसुजीवनि ।*
*मज्जीवनाद्यकर्त्र्यम्ब मदन्तरङ्गदेवते ॥ ६१५*

*मच्चित्तगोमुखारामे मन्मनोहैमवाहिनि ।*
*मद्धृत्सागरसत्सङ्गे मत्प्रेमाम्बुधिसङ्गमे ॥ ६१६*

## । श्रीगङ्गाक्षरपुष्पावली ।

अगहैमोद्भवा गङ्गा अब्धियुक्ता अधोवहा ।
अन्तारामा अतिस्तुत्या अक्षरावलिसन्नुता ॥ ६१७

अम्बा गङ्गा अतिप्रेष्ठा अक्षरारम्भपूजिता ।
अक्षरा अक्षराभासा अक्षय्या अचलोद्भवा ॥ ६१८

अन्तर्मुखी बहिर्वाहा अन्तरात्मसमिश्रिता ।
अन्तःस्फूर्तिकरा गङ्गा अन्तर्ज्योतिःप्रकाशिनी ॥ ६१९

अखण्डैकरसापूर्णा असमानप्रभावखा ।
अप्रमेया अजाजर्णा अक्षरावलिमण्डिता ॥ ६२०

अखण्डाध्यातसद्रूपा अखण्डानन्दनादिनी ।
अखण्डनामसङ्गीता अखण्डानन्दकारिणी । ६२१

अखण्डास्रावलावण्या अखण्डागीतसुस्वरा ।
अखण्डनादधारा च अखण्डचण्डरंहणा । ६२२

अखण्डदीपसंभासा अखण्डासारगास्मिता ।
अखण्डमङ्गलाशीदा अखण्डमानसस्तुता । ६२३

अखण्डधारसानन्दा अखण्डस्फूर्तिवाहिनी ।
अखण्डज्ञानशिक्षा मा अखण्डज्ञानदीपिनी ॥ ६२४

अत्यूषस्नानानन्दा च अत्यूषमृदुगालया ।
अत्यूषजपवर्णा च अत्यूषसुस्वरार्चिता ॥ ६२५

अशोषकवितावाहा अशोष्याह्लादकाव्यझा ।
अनश्वराशुगा गङ्गा अत्याशुकविसिद्धिदा ॥ ६२६

अन्तर्लीना मनोरङ्गा अन्तर्ह्रींकारदेवता ।
अन्तःसूक्ष्मप्रवाहा च अन्तरोंकारनादिनी ॥ ६२७

अविरामकविस्तुत्या अविरामसुनामगा ।
अविरामरयारामा अविरामा मनोरमा ॥ ६२८

अक्षरान्तस्थसत्त्वा च अक्षिता अक्षितामृता ।
अन्तरात्मलया गङ्गा अन्तरालयदैविका ॥ ६२९

आत्मारामारमारामा आत्मानन्दप्रवाहिणी ।
आत्मानुभूतिसारा च आत्मविश्वासपूरणी ॥ ६३०

आत्मज्ञानावबोधा च आसुरीगुणधावनी ।
आपःस्वच्छमनोगम्या आत्मीभावसुभावना ॥ ६३१

आनन्दकन्दमूला च आद्यन्तरहिताहिता ।
आशापाशविनाशा च आशंसिता सुशंसिता ॥ ६३२

आयुरारोग्यदात्री च आमयार्तिनिवारिणी ।
आदिशक्तिजलासारा आदिशब्दप्रणादिनी ॥ ६३३

आह्लादनादवाहा च आत्मसँल्लीनसुस्वरा ।
आधारश्रुतिसत्सारा आपःस्वरूपविग्रहा ॥ ६३४

इष्टेष्टिपूरणा गङ्गा इहभोग्यैकभोग्यदा ।
इलावाहा सुवर्गोदा इहप्रत्यक्षदेवता ॥ ६३५

इक्षुस्रावकविस्तुत्या इक्षुसारातिमाधुरी ।
इहसौख्यपरानन्दा इहसिद्धिप्रदायिनी ॥ ६३६

ईक्षणातिमुदावाहा ईशशीर्षप्रवाहिणी ।
ईडाप्रीता च ईडेशी ईशसन्नुतमोहिनी ॥ ६३७

ईडाधारसुधाप्लावा ईहितानन्ददायिनी ।
ईहितश्लोकसञ्चाया ईहितश्लोकपूरणी॥ ६३८

ईहासंपरिपूरा च ईहितारोग्यतुष्टिदा ।
ईहितासारदृष्टिश्च ईहिताप्लावमज्ञ्जना ॥ ६३९

उत्पावनहिमासारा उन्मादनहिमाप्लवा ।
उन्मत्तगर्जनासारा उन्मत्तासक्तचित्तगा ॥ ६४०

उत्तमश्लोकसङ्गीता उत्तमासक्तिदायिनी ।
उत्तमोत्तमतीर्था च उत्तमानुभवस्तुता ॥ ६४१

ऊर्ध्वमूला अधोवाहा ऊर्ध्वलोकावतारिणी ।
ऊर्ध्वोड्डीनोर्मिमाला च ऊर्ध्वदृष्टिप्रसादिनी ॥ ६४२

ऊषातिरमणीया च ऊषकस्नाननन्दिनी ।
ऊषकाध्यातगीता च ऊषकस्तवसेविता ॥ ६४३

ऋषिसन्नुतकीर्तिश्च ऋषिजह्नुसुपुत्रिका ।
ऋषिसंवासपारा च ऋषिसङ्कुलशङ्करी ॥ ६४४

ऋषभारूढमूर्धन्या ऋणानुबन्धमोचनी ।
ऋद्धिदा ऋद्धिवाहा च ऋतधाम्नी ऋदूदका ॥ ६४५

एका एकगुणासारा एकवाक्स्तुतिसस्मिता ।
एकवस्तुस्वरूपा च एकतत्त्वप्रकाशिनी ॥ ६४६

एकनिष्ठापरास्नाता एकानुभवहर्षिणी ।
एकनिष्ठापराध्याता एकानुभवसन्नुता ॥ ६४७

एकान्तसुस्वरा गङ्गा एकान्तमौनवाहिनी ।
एकान्तमौनसङ्गीता एकान्तध्यानगोचरा ॥ ६४८

एकभक्तिस्तुता गङ्गा एकपुत्रीमनोलया ।
एकान्तसत्सुसङ्गा च एकान्तमानसालया ॥ ६४९

एकाकिन्यैकसंतोषा एकसंतोषवाहिनी ।
एकसंतोषवाक्स्फूर्तिः एकसंतोषवाग्वहा ॥ ६५०

ऐकाग्र्यसंस्तुता देवी ऐक्यचित्तस्तुतिस्थिरा ।
ऐक्यमानससम्पूर्णा ऐक्यहृत्सन्निवासिनी ॥ ६५१

ओंकारघोषणा गङ्गा ओंकारश्रुतिगीतिका ।
ओंकारस्रवमाधुर्या ओंकारब्रह्मरूपिणी ॥ ६५२

औषधीरसवाहा च औत्तरावाहिनी जनी ।
औपसर्गिकपाठा च औपश्लेषिकमोदिनी ॥ ६५३

औजस्यवारिसत्सारा औडवादिसुरागिणी ।
औषस्यरागसङ्गीता औषसीमृदुरागिणी ॥ ६५४

कल्याणगुणमाहात्म्या कल्याणाद्भुतसच्छविः ।
कल्याणकवना गङ्गा कल्याणकवितावरा ॥ ६५५

कलिकाकाव्यसंफुल्लिः कविमानससस्मिता ।
कलालापतरङ्गा च कलालापनुतिस्तुता । ६५६

कलिक्लेशितसुश्राया कलिक्रूरत्ववारणी ।
कलिरावप्रशाम्या च कलितामोदगीतिका ॥ ६५७

कर्मकौशलसंपादा कर्मसिद्धिप्रसादिनी ।
कर्मबन्धनविच्छिन्ना कर्मनिर्वृत्तिकारिणी ॥ ६५८

काव्यालापनिनादा च काव्यालङ्कारमण्डिता ।
काव्योल्लासविलासा च काव्यालापाभिवन्दिता ॥ ६५९

किरातिकिरणाभा च किरणावलिशोभिता ।
किंकिरातसुगापारा किलाकिलजटोदका ॥ ६६०

किशोरी कीर्तिता गङ्गा कीर्तनाधारसुश्रुतिः ।
कीलालपावना पुण्या कीलाललाससद्द्युतिः ॥ ६६१

कुटिलालककल्लोला कुन्दस्मिततरङ्गिणी ।
कुञ्चिताद्रिदरीवाहा कुङ्कुमाङ्कितरङ्गिणी ॥ ६६२

कुहावृता उषोरम्या कूलंधयगृहस्पृहा ।
कूलंकषप्रवाहा च कूपस्नातातिकाङ्क्षिता ॥ ६६३

कृतिराजगुरुस्तोमकृतिवाहप्रवाहिणी ।
कृत्यौघानुदिनागीता कृत्यौघगुरुवाक्स्थिरा ॥ ६६४

कृत्याकृत्योपदेशा मा कृच्छ्रवाहा कृपावहा ।
कृपणोद्धारणा गङ्गा कृतापराधधावनी ॥ ६६५

कृशनाभतरङ्गा च कृष्णागकृशनस्मिता ।
कृष्णवागमृता गङ्गा कृष्णा कृष्णस्वरूपिणी ॥ ६६६

केदारनाथमौलिस्था केदारोत्तुङ्गवाहिनी ।
केदारलिङ्गसंसेका केवलज्ञानदायिनी ॥ ६६७

कैरवीरविभासा च कैवल्यसिद्धिदायिनी ।
कैटभारिनुता गङ्गा कैलासनाथमोदिनी ॥ ६६८

कोपतापातिदूरा च कोकिलाकूजकूलभूः ।
कोलाहलहला गङ्गा कोमलाङ्कितकोमला ॥ ६६९

कौवेरीमोदशुक्लाभा कौशलावहगङ्गिका ।
कौमुदीकौशसंभासा कौशेयोल्लोललोटना ॥ ६७०

कौशल्यासुतसन्नूता कौशेयगेयसंस्थिता ।
कौस्तुभाङ्कितपादोदा कौतुकाङ्कितसत्स्तवा ॥ ६७१

क्रतुदात्री क्रतुप्रीता क्रान्तिगा मा क्रमावहा ।
क्रियायोगस्थितानूता क्रीडास्थलहिमालया ॥ ६७२

क्रूरसंसारपारा च क्रोधाद्यारातिसूदनी ।
क्रोडीकृतैकपुत्री च क्लान्तिसंवाहसंवरा ॥ ६७३

क्लिष्टसाध्यलघूत्थाना क्लेशक्लोशप्रणाशिनी ।
क्वणद्वीणासुवाणी च क्षणायापि न विस्मृता ॥ ६७४

क्षणिनीक्षणिकाभासा क्षराक्षरा क्षितिक्षरा ।
क्षणक्षिप्रस्रवा गङ्गा क्षमा क्षमान्यरूपिणी ॥ ६७५

क्षालिताश्रितपापा च क्षाम्यभक्ताश्रितावनी ।
क्षारक्षरसुरूपा च क्षामसञ्जीवनी वनी ॥ ६७६

क्षितिजापूजिता क्षिप्रा क्षिप्रप्रवाहमोहिनी ।
क्षित्यागतसुराप्लावा क्षिप्रोद्धारणमाहिना ॥ ६७७

क्षीणभक्ताघकात्स्न्र्या च क्षीणजन्मौघवारणी ।
क्षीराब्धिकन्यकानूता क्षीरोर्मिस्वागतस्मिता ॥ ६७८

क्षुद्रतापोहना गङ्गा क्षुब्धमानसशामनी ।
क्षुब्धार्णवप्रवाहा च क्षुभितोल्लोलधावनी ॥ ६७९

क्षेम्या क्षेमंकरा माता क्षेत्रेशी क्षेत्रपावनी ।
क्षौणिभृत्संभवा गङ्गा क्षौणिप्राचीरसङ्गमा ॥ ६८०

क्षौमसम्मृदुवाचा मा क्षौमवाक्संप्रदायिनी ।
क्षौमवाक्संप्रवाहा च क्षौमसंभासवार्दरा ॥ ६८१

खंददा खापगा गङ्गा खाण्डवस्वादुखावरा ।
खिन्नमानसशाम्या मा खेदहा ख्यातिदायिनी ॥ ६८२

गगनावतरा गङ्गा गम्भीरस्वरघोषिणी ।
गतितालसुगाप्लावा गमनाद्भुतगालया ॥ ६८३

गङ्गा हिमापगा दिव्या गमनारम्भगोमुखी ।
गङ्गोत्तरी तपस्तीर्था गभीरदरिवाहिनी ॥ ६८४

गङ्गाहरिशिलारूपा गहनान्तरघर्घरा ।
गमनोत्तरकाशी च गतिनिम्नसुसङ्गमा ॥ ६८५

गङ्गाभागीरथीयुक्तगम्भीरालकनन्दभा ।
गङ्गा देवप्रयागा मा गभीरार्चितराघवा ॥ ६८६

गतनिम्नहृषीकेशा गङ्गाहरिपदोदका ।
गङ्गागतहरिद्वारा गगनागसमागता ॥ ६८७

गतिप्रयागसुक्षेत्रा गङ्गार्कतनयायुता ।
गतमानवपापा च गङ्गा काशीपुरागता ॥ ६८८

गहनाघविनाशा च गत्युत्तमसुखावनी ।
गतिकालीनिवासा च गङ्गासागरसङ्गता ॥ ६८९

गङ्गा हिमसमावाहा गम्भीरनिधिसालया ।
गद्यपद्यनुतागीता गद्यपद्यप्रवाहिणी ॥ ६९०

गानपुष्पार्चिता गङ्गा गाहितागह्वगह्वरा ।
गायगाम्भीर्यमाधुर्या गायमाधुर्यवाग्वरा ॥ ६९१

गिरीशकटकावाहा गिरिजा गिरिनन्दिनी ।
गिरीशच्छविवाहा च गिरिदर्शितगान्दिनी ॥ ६९२

गीताचार्यस्वरूपा च गीतासारसरिद्वरा ।
गीतवाद्यस्तुता गङ्गा गीतवाद्यश्रुतिस्रवा॥ ६९३

गुणसत्त्वप्रकाशा च गुणातीतस्वरूपिणि ।
गुणसत्त्वप्रसादा च गुणातीतप्रसान्त्विनि ॥ ६९४

गुप्तप्रवाहमूला च गूढोत्मतीर्थरूपिणी ।
गृहपूजनगेयस्था गैरिकी गोमुखोद्भवा ॥ ६९५

गौरीगुरुझरासारा गौरीगुरुझटासरा ।
गौरीगुरुगुहाध्याता गौरा गौरांशुगौरभा ॥ ६९६

ग्रन्थमूला च सुप्राणा ग्रन्थिताक्षरमालिनी ।
ग्रन्थार्थभावपुष्टिश्च ग्रन्थश्च ग्रन्थदेवता ॥ ६९७

ग्रहदोषनिवारा च ग्रहणाद्यन्तगाहिता ।
ग्रावधावालुटन्ती च ग्रावहैमप्रवाहिणी ॥ ६९८

ग्रीष्मस्नानातिसौख्या च ग्रीष्मतापप्रशामनी ।
ग्रीष्मक्षरातिशीता च ग्लानिक्षालनजीवना ॥ ६९९

घटनापरिपूर्णा च घनाघनौघवाहिनी।
घनवृष्ट्युत्प्लवोर्मिश्च घनौघमध्यघर्घरी ॥ ७००

घारशीतोर्मिघूर्णिश्च घृतदीपस्फुरद्घृता ।
घोरसंसारनिस्तारा घोराघघनघातिनी ॥ ७०१

चण्डवेलाप्लवा गङ्गा चण्डमारुतडीनका ।
चण्डभास्करतापघ्नी चन्द्रिमाचारुलासका[6]॥ ७०२

चापल्याङ्कितवेला च चापल्यनिग्रहधृतिः ।
चारुचित्रप्रवाहा च चारुसारातिसुस्वरा ॥ ७०३

चिन्तितार्चितपूर्णा मा चिन्तनापरिपूरणी ।
चिरस्थायिसुतीर्था च चिरस्थायिसुखावनी ॥ ७०४

[6]बहुव्रीहिः

चिन्तनापूरसाकल्या चिन्तनार्चनपूजना ।
चिन्तनादूरवैशिष्ट्या चित्तशुद्धिप्रसादिनी ॥ ७०५

चिन्तनापारदूरा च चित्तातिदूरवाञ्छिता ।
चिन्तनासारगङ्गाका चित्ताविदूरमातृका ॥ ७०६

चीर्णनामावलीपूज्या चोदितश्लोकपूजिता ।
चैतन्यब्रह्मकंरूपा चौक्षालापकविस्तुता ॥ ७०७

छप्रवाहच्छविच्छन्द्रा छन्द्रान्तश्छन्द्रसच्छविः ।
छन्दस्कृतकविस्तुत्या छन्दस्यकवितालया ॥ ७०८

छायामण्डलसंवृत्ता छायार्कसंलसत्प्रभा ।
छायाच्छायालसद्वीचिश्छायासूनुव्यथापहा ॥ ७०९

छिद्रहृच्छामना गङ्गा छिद्रान्वितस्तुतिस्तुता ।
छुरिताक्षरमाला च छुरितासक्तिमानसा ॥ ७१०

जलेशशायिपादौघा जलेशगजलाषका ।
जगदुद्धारणा गङ्गा जगदानन्दकारका ॥ ७११

जलदैविकपुण्या च जन्ममृत्युनिवारिणी ।
जलौषध्यमृतासारा जपादितपवर्धिनी ॥ ७१२

जप्तनामातिसारा च जपयोगसुसाधना ।
जल्पेशी जवनी गङ्गा जह्नुकन्या च जाह्नवी ॥ ७१३

जाग्रत्स्वप्नप्रसत्तिश्च जाड्यापोहनजाङ्गली ।
जापसारजलासारा जालसंसारमोचनी ॥ ७१४

जितमानसवासा च जिज्ञासुश्रायगङ्गिका ।
जिह्वराजितसन्नाम्नी जिह्वपावनतीर्थका ॥ ७१५

जीवस्फूर्तिसमाख्याता जीवस्फूर्तिसुजीवना ।
जीवस्फुरत्स्तुतिस्फूर्तिस्फुरज्जीवस्फुरद्रसा ॥ ७१६

जीवश्लोकसुजीवा च जीवन्मुक्तिकरावनी ।
जीवन्मुक्तपनुस्तोत्रजीवतत्त्वार्थरूपिणी ॥ ७१७

जुष्या जूर्णिमती गङ्गा जूर्णिप्रवाहमोहिनी ।
जूर्णिभक्तवरादात्री जूर्णिश्लोकवरालया ॥ ७१८

जोटिङ्गाहूतगङ्गाका जोटिङ्गव्रतपूरणी ।
जोटिङ्गजूटवाहा च जोषिकाश्लोकपूजिता ॥ ७१९

ज्ञातव्या ज्ञप्तिकीर्तव्या ज्ञानमोक्षप्रदायिनी ।
ज्योतिर्मयी जलाषा च ज्वरवेगजलौषधी ॥ ७२०

झंकारश्रुतिगम्भीरा झंकारिणी झरी धरी ।
झांकृतापातवेगा च झंझानिलातिघूर्णना ॥ ७२१

टङ्कात्यद्भुतरीतिश्च ठक्कुराकृतिपूजिता ।
डमर्वानादशीर्षस्था ढौकनश्लोकवन्दिता ॥ ७२२

तक्षितोपलशिल्पा च तक्षितश्लोकविग्रहा ।
तटिनीतन्तुरूपा च तन्त्रीस्वरलयानुता ॥ ७२३

तपस्तीर्था तपोपान्ता तपोवर्धनवर्त्मना ।
तपोलीनमनोलीना तपःपुण्यफलावहा ॥ ७२४

तत्त्वोपदेशसारा च तद्वस्तुव्यक्तरूपिणी ।
तत्त्वार्थबोधकारा च तत्त्वज्ञानस्वरूपिणी ॥ ७२५

तापत्रयाग्निशाम्या च तापसाश्रयतामरा ।
तापितैकाशया गङ्गा तापसार्तिनिवारिणी ॥ ७२६

तितीर्ष्वाश्रितसत्तीर्था तीर्थतीर्णभवार्णवा ।
तुङ्गहैमाद्रिगङ्गाका तुङ्गकोलाहलोर्मिका ॥ ७२७

तूष्णींकारतुषारौघा तूष्णीकतुहिनालया ।
तूर्णिरीतिरसाप्लावा तूर्णिगङ्गोत्तरीप्लवा ॥ ७२८

तृषितात्यूषगाहा च तृषिताद्भुतताविषी ।
तृषालुमानसाहूता तृषालुमनआगता ॥ ७२९

तेजस्करी सुतेजा च तैर्थिकस्थलशोभना ।
तोयरूपा च तौषारा तौषाराद्रिविहारिणी ॥ ७३०

त्यक्तषड्दोषवाग्वाहा त्यागराजकृतिस्थिरा ।
त्रात्री त्रिलोकपूज्या च त्रिगुणातीतरूपिणी ॥ ७३१

त्रिविद्यासारधारा च त्रुटिमपि न मन्दगा ।
त्रैकाल्यस्नानपुण्या च त्रैलोक्यातीतमाहिना ॥ ७३२

दशरात्र्योत्सवा गङ्गा दशाशुभकरी हरी ।
दहराकाशनिध्याता दहराकाशदीपिनी ॥ ७३३

दारुणाचारुधारा च दार्दुरस्वादुभोग्यता ।
दान्ताहंकारदर्पा च दान्तमानसवासिनी ॥ ७३४

दिव्या दिव्याम्बुसत्सौख्या दिव्यानुभवहर्षदा ।
दिव्यवाक्सौष्ठवादात्री दिव्यानुभवसंस्तुता ॥ ७३५

दिव्यकीलालसौम्या च दिव्यनामातिमोदिनी ।
दिव्यसङ्कीर्तनावाहा दिव्यदृष्टिप्रदासुदा ॥ ७३६

दिनरात्रिस्मृता गङ्गा दिनाद्यन्तावगाहिता ।
दिनराड्रश्मिहीराभा दीनार्तिभञ्जनी जनी ॥ ७३७

दीपावलिशुभस्नाता दीपज्योतिर्लसत्सला ।
दीपसङ्कुलसंभासा दीपारतिसुपूजिता ॥ ७३८

दुःखशोकपरित्राणा दुग्धौघदृष्टिपूरणी ।
दूरिकृताघसङ्घाता दृष्टिप्रसादमोचनी ॥ ७३९

दृढनिश्चयगाहा च दृढभक्तिप्रसादिनी ।
दृढशक्तिप्रदा गङ्गा दृष्टमात्रप्रहर्षिणी ॥ ७४०

देवलोकावतारा च देवभूमिहिमालया ।
देहारोग्यमनस्तुष्टिधीतिदा दैवगङ्गिका ॥ ७४१

दोषक्लेशादिधावा च दौर्बल्यापहमावरा ।
द्युनदी द्युतिरूपा च द्योतितासक्तमानसा ॥ ७४२

द्रवरूपपरैका च द्रावितात्रितकल्मषा ।
द्रुतप्रवाहरीतिश्च द्रोणीसाधुप्रसर्पिणी ॥ ७४३

द्वन्द्वातीतसुखावाहा द्वन्द्वातीतसुखावहा ।
द्विकरेहपरार्था च द्वीपैकान्तसुखावहा ॥ ७४४

द्वेषःपरार्तिहारा च द्वैताद्वैतप्रबोधिनी ।
द्वैधीभावापनेत्री च द्वैपप्रशान्तिदायिनी ॥ ७४५

धरणीधरधारा च धरणीप्लवसंयुता ।
धरुणी धवलासारा धवाणकगतिप्लवा ॥ ७४६

धिषणावसना गङ्गा धिष्ण्या च धीतिवर्धिनी ।
धीशक्तिसुप्रसादा च धीरतावर्धिनी धुनी ॥ ७४७

धीरसुस्वरगाम्भीर्या धूपदीपादिपूजिता ।
धूपिताश्रितमागङ्गा धूमावृतविभातभा ॥ ७४८

धृतात्ममानसाध्याता धृत्यवश्यकरप्लवा ।
धेयेदंश्लोकसंपूर्णा धैर्यधैवत्यकारिणी ॥ ७४९

धोरणीश्लोकसङ्गीता धौतसद्भक्तमानसा ।
धौतप्रवाहधौती च धौतभक्ताघमण्डला ॥ ७५०

ध्यातव्या ध्यानगम्या च ध्याता ध्यानाभिवर्धिनी ।
ध्यानारिध्वंसना गङ्गा ध्यानमानसगोचरा ॥ ७५१

ध्यातप्रवाहरीतिश्च ध्यातप्रशान्तिसंवरा ।
ध्यानवर्धनशान्तिश्च ध्यानसँल्लीनसालया ॥ ७५२

ध्रुवसिद्धिप्रदा गङ्गा ध्वस्तराजसतामसा ।
ध्वनितोंकारवाहा च ध्वान्तमानसदीपिका ॥ ७५३

नदिश्लोका नदीश्रेष्ठा नदत्प्रणवसारगा ।
नताघनाशना गङ्गा नतानूता नदाश्रिता ॥ ७५४

नमस्युनमसा गङ्गा नरकप्रतिकारखा ।
नवनव्यसुखा गङ्गा नवग्रहकृतापहा ॥ ७५५

नवनव्यसुरीतिश्च नवनव्यसुजीवना ।
नवनव्यकृतिस्तुत्या नवजीवनजीवनी ॥ ७५६

नष्टशोका नवादृश्या नश्वरातीतसौख्यदा ।
नष्टलोभादिदोषा च नश्वरान्तरनश्वरा ॥ ७५७

नाकापगा नदीपुण्या नागशायिपदोदका ।
नागरोज्ज्ञीवनालोका नागरीदिव्यविग्रहा ॥ ७५८

नानारसनटोल्लोला नानाध्वनिनदत्सला ।
नानार्थवाग्रसावाहा नानाभावनमस्कृता ॥ ७५९

नाभीहृत्कण्ठजिह्वोत्थनादप्रवाहघोषिणी ।
नामगाननदासारा नादसाररसाप्लवा ॥ ७६०

नादसुस्वरनाम्नी च नादितोंकारविग्रहा ।
नारदासङ्गसङ्गीता नादोपासनवन्दिता ॥ ७६१

नितरां भाविता गङ्गा नित्यनूतनलक्षणा ।
नित्यनिर्मलनीरा च नित्यसौमङ्गलावहा ॥ ७६२

नित्यानित्यबुधाना च नित्यत्वराजमार्गिणी ।
निर्वाणफलमाहात्म्या निर्वाणज्ञानमार्गिणी ॥ ७६३

निरन्तरसुखावाहा निरन्तरसुखावहा ।
निरन्तरत्वसद्रूपा निरन्तररसास्पदा ॥ ७६४

निरस्तकर्मबन्धा च निर्यापिताश्रितामया ।
निर्घातशब्दसाद्रावा निर्वातगह्वरालया ॥ ७६५

निर्मला निर्मलाकारा निर्मलाकारमानसा ।
निर्मलानन्दसत्सारा निर्मलानन्दमानसा ॥ ७६६

निर्मलाकाशशोभा च निर्मलाकाशनीलका ।
नीलनिर्मलकाचाभा नीराभासचिदात्मिका ॥ ७६७

नीरपूतसुवैशिष्ट्या नीरपूतासुवाक्स्थिरा ।
नीरनैर्मल्यरूपा च नित्यनैर्मल्यसाङ्किता ॥ ७६८

नीरनीलप्रदोषाभा नीरनीराजनप्रभा ।
नीहारवास्तवारम्या नीहारमयगोमुखी ॥ ७६९

नुतिश्लोकस्थिता गङ्गा नूतनश्लोकवन्दिता ।
नृत्यगेयतरङ्गा च नेत्री नेत्रोत्सवोत्प्लवा ॥ ७७०

नैगमागमसारा च नैभत्यश्लोकवन्दिता ।
नैसर्गिकातिनैर्मल्या नैःश्रेयसी च नैष्ठ्यदा ॥ ७७१

परानन्दापरार्था च परलोकभयापहा ।
पद्यगद्यपदार्था च पद्यगद्यपदासरा ॥ ७७२

पात्रपूजितपावित्र्या पायौघालयहृत्स्थला ।
पार्वतद्युतिमाला च पारमार्थिकसौख्यदा ॥ ७७३

पिण्डलाह्लाददर्शा च पीनप्रवाहहर्षिणी ।
पुष्पार्चितातिपुण्या च पूतमानसपूजिता ॥ ७७४

पूतवाङ्मानसापूता पूतवाग्धारधावनी ।
पूतोपान्ताप्लवापूता पूतपूतप्लवाप्लुता ॥ ७७५

पृथुकीर्तिप्रदा गङ्गा पेयूषतोयवाहिनी ।
पोतना पौर्णमीभासा प्यायिताप्लावभासुरा ॥ ७७६

प्यायिताप्लाविका गङ्गा प्रचोदितनुतिप्लवा ।
प्रणवाप्लावसारा च प्रणतिस्तुतिनन्दिनी ॥ ७७७

प्रसादसलिलाह्लादा प्रसादप्रशमालया ।
प्रसादस्फूर्तिसच्छ्लोका प्रसादशुभसत्फला ॥ ७७८

प्रसन्नचित्तसद्धारा प्रसत्तिस्फूर्तिचेतसा ।
प्रसन्ना प्रशमा गङ्गा प्रसत्त्यासक्तिपूजिता ॥ ७७९

प्राक्सन्ध्याप्रशमापूरा प्राणपूरितसज्जला ।
प्राणदात्री कविप्राणा प्राशुगा प्रांशुशैलभा ॥ ७८०

प्राणबीजहिमासारा प्रासादहैमशेखरा ।
प्रासानुप्रासभासा च प्रासादश्लोकसञ्चया ॥ ७८१

प्रियमानसपूजा च प्रीणनस्वादुतीर्थका ।
प्रेङ्खोलोल्लोललावण्या प्रेरितश्लोकगीतिका ॥ ७८२

प्रोन्मीलश्लोकपुष्पा च प्रोन्मूलिताघभूरुहा ।
प्रोल्लाघितदृढीकर्त्री प्रौढीभूतकविप्लवा ॥ ७८३

प्लवारामा प्लुतारामा प्लाविकाशीतसौख्यदा ।
प्लुतीक्षणक्षणा गङ्गा प्लुतोर्मिकान्त्यतीतभा ॥ ७८४

फलितेप्सितसिद्धिश्च फुल्लनामसुमार्चिता ।
फुप्फुसाफुल्लनास्नाना फेनिलद्युतिसस्मिता ॥ ७८५

बंहिष्ठापःप्रमोदा च बंहिष्ठासक्तिवन्दिता ।
बदरीनाथपादौघा बदरीधाममेखला ॥ ७८६

बद्धचित्तनिवासा च बन्धपाशविमोचनी।
बलवाहबलाहा च बलिष्ठा बलदायिनी ॥ ७८७

बहुस्नाता बहुध्याता बहुलस्तुतिचोदना ।
बहुलार्तिहरा गङ्गा बह्वीप्सितमदम्बिका ॥ ७८८

बहुदूरप्रभावा च बहुवेगनदीवरा ।
बहुधाराप्रवाहा च बहुबा बहुकीर्तिता ॥ ७८९

बहुदूरेप्सिता गङ्गा बहुदूरस्मृतास्तुता ।
बहुदूरमनस्स्नाता बहुदूरमनःस्थिता ॥ ७९०

बहुजन्मकृताघौघबहिष्करणपावनी ।
बहुकर्मविनिर्मुक्तिज्ञानमोक्षसुखावनी ॥ ७९१

बालप्लावविनोदा च बालालापविनोदिनी ।
बालार्कस्फुरबा गङ्गा बाहुलच्छविमोदिनी ॥ ७९२

बिभीषणप्रवाहा च बिलहृत्स्थलवासिनी ।
बीजबुद्धिप्रसादा च बीजाक्षरनिवासिनी ॥ ७९३

बुद्ध्यतीतस्वरूपा च बुधसज्जनतोषिणी ।
बृहत्पुण्यावहा गङ्गा बृहत्कीर्तिप्रदायिनी ॥ ७९४

बोधनातीतवाक्शौर्या बोधितस्वसुकीर्तना ।
बोद्धव्या बोधरूपा च बोधातीतसुबोधना ॥ ७९५

ब्रह्मानन्दस्वरूपा मा ब्रह्मविद्याप्रबोधिनी ।
ब्रह्मानन्दप्रसादा च ब्रह्मैक्यतत्त्वबोधिनी ॥ ७९६

ब्रह्मानुभूतिसारा च ब्रह्मनिष्ठाभिवर्धिनी ।
ब्रह्मानन्दसुखा गङ्गा ब्रह्मतेजस्सुवर्धिनी ॥ ७९७

ब्राह्ममुहूर्तनिध्याता ब्राह्ममुहूर्तमग्नता ।
ब्राह्ममुहूर्तसङ्गीता ब्राह्ममुहूर्तशान्तता ॥ ७९८

भक्तावनी भगावाहा भक्तिश्लोकाभिवन्दिता ।
भङ्गापनयना गङ्गा भजनानन्दवाहिनी ॥ ७९९

भद्रवाग्वसुदा गङ्गा भण्डिमण्डितभण्डिला ।
भद्रवाग्वर्षवाहा च भद्रवागर्थसारता ॥ ८००

भरिताद्भुतपानीया भर्मराजितपुष्करा ।
भवरोगव्यथापोहभैषज्यसलपुष्कला ॥ ८०१

भावातीतस्वभावा च भावप्रभावभाविता ।
भावनातीतभावा च भावनाभावभावना ॥ ८०२

भावानुगनुतिश्लोका भावभावगभावनी ।
भासमानासमाना च भावभासनभास्वती ॥ ८०३

भिन्नहृत्भेषजा गङ्गा भीष्मतृष्णाशमागता ।
भीषणासारभीष्मा च भीतेहबन्दिमोचनी ॥ ८०४

भुवनाद्भुतपावित्र्या भुवनत्रयपावनी ।
भूमण्डलागता दिव्या भूयो भूयो नमस्कृता ॥ ८०५

भृगुसानुहिमोपान्ता भृतहेमभगीरथी ।
भृतशीतोत्तरी गङ्गा भृशोद्वेगप्रशामनी ॥ ८०६

भेदिताध्यादिमूला च भेरुण्डचारुनिर्झरी ।
भैषज्यदिव्यकीलाला भैरवालयकन्दरी ॥ ८०७

भोगभोजिसुवाहौघा भौवनाभौवनावना ।
भ्रान्तचित्तैक्यकारा च भ्रूमध्यैक्यमनस्स्फुरा ॥ ८०८

मङ्गल्यसुप्रवाहा च मङ्गल्यवाक्प्रवाहिणी ।
मङ्गलायनमग्ना च मङ्गलानन्दमार्गिणी ॥ ८०९

मन्युमात्सर्यशाम्या च मदादीतरदोषहा ।
मधुगानवरा गङ्गा मदाधिव्याधिनाशिनी ॥ ८१०

मनोवेगप्रशाम्या च मनउद्वेगवाहिनी ।
मनःक्षुद्रापहा गङ्गा मनःपङ्ककरावनी ॥ ८११

मन्दाकिनी मदानन्दा मन्दभाग्यबहिष्करा ।
मनश्शान्तिप्रदा गङ्गा मनोमन्दिरदैविका ॥ ८१२

महत्प्रत्यूषनिध्याता महच्छान्तिप्रणादिनी ।
महत्प्रत्यूषकस्नानध्यानगानवरप्रदा ॥ ८१३

महद्दूरप्रवाहा च मनोनिकटसंस्थिता ।
मनोवागर्चिता माता मनोमण्डलपावनी ॥ ८१४

मनआवृत्तिरोधा च मनआकाशपूरणी ।
मनोमौनप्रसक्तिश्च मनोहैमप्रवाहिणी ॥ ८१५

मनोमन्त्रध्वनिर्गङ्गा मनोमन्त्रस्वरूपिणी ।
मनोनादलया गङ्गा मनस्सुस्वरदेवता ॥ ८१६

मनस्साक्षात्कृता गङ्गा मनःप्रत्यक्षदेवता ।
मनोऽनुभववागर्था मनऐकाग्र्यदायिनी ॥ ८१७

मनआकाशगङ्गामा मनोगोमुखघोषिणी ।
मनोगङ्गोत्तरीलास्या मनआलयपावनी ॥ ८१८

मनआकाशगाङ्गाभा मनोनादझरासरा ।
मनःप्रसादना गङ्गा प्रसादितमनस्स्फुरा ॥ ८१९

मनस्ककुम्भसद्धारा मनोजवाक्स्वरूपिणी ।
मनोजस्तुतमन्माता मनोवाक्स्थिरगामिनी ॥ ८२०

मनःस्फूर्तिस्तुता गङ्गा मनोमयमदम्बिका ।
मनःप्रणवनादा च मनआलीनगङ्गिका ॥ ८२१

मनोगोत्रपरीवाहा मनःपुण्यस्थलस्थिरा ।
मनोरुहप्रवाहा च मनस्सङ्गमसुस्थला ॥ ८२२

मनस्सागरसङ्गा च मनःपारप्रशंसिता ।
मनोगभीरनिध्याता मनोमिश्रितमावरा ॥ ८२३

मनोगुहावहा गङ्गा मनोरङ्गस्फुरत्स्मिता ।
मनोधीरबहुस्नाता मनश्शान्तिलयालया ॥ ८२४

मनोरम्यउषोभासा मनस्सन्ध्याप्रसान्त्विनी ।
मनस्सारमया गङ्गा मनआनन्दवाहिनी ॥ ८२५

मनःपुष्पासनासन्ना मनःपुष्पासवासुधा ।
मनःपुष्पार्चिता गङ्गा मनःपुष्पालयस्मिता ॥ ८२६

मनःपुष्पातिमोदा च मन्मनोमण्डलालया ।
मनःपुष्पार्चनप्रीता मनःपुष्पाभिवर्षिता ॥ ८२७

मनस्संदर्शिता गङ्गा मनोमौननिनादिनी ।
मनस्सङ्कल्पिता माता मनोलयसुखावनी ॥ ८२८

मनोरागा मनोगाना मदारामा मनोजगा ।
मदासक्तिस्तुता गङ्गा मुदाशक्तिप्रदायिनी ॥ ८२९

मानसाराधिता गङ्गा मानसप्रवहानदा ।
मानसासारवाग्वर्षा मानसारामरामका ॥ ८३०

मानसादर्शबिम्बा च माहेन्द्रीमायुमङ्कुरा ।
मानसोल्लासलासा च मानसाभाससद्रसा ॥ ८३१

मित्रोदयप्रभासा च मिथ्यातथ्यप्रबोधिनी ।
मित्रोदयपरिप्लाव्या मिहिकामयपावना ॥ ८३२

मुमुक्षुश्रायसत्तीर्था मुक्तिसद्गतिसंप्रदा ।
मुनिसज्जनसन्नुता मुनिवाक्चित्तगामिनी ॥ ८३३

मूकवाक्संस्तुता गङ्गा मूकवाक्संप्रदायिनी ।
मूलाधारस्थिता देवी मूलाधारप्रणादिनी ॥ ८३४

मृदुसुस्वरसङ्गीता मृदुसङ्गीतसुस्वरा ।
मृदुस्पर्शातिहर्षा च मृदुलस्वरमोदिनी ॥ ८३५

मेघश्यामतलाभासा मेघगाम्भीर्यनादिनी ।
मेघदीपस्फुरद्भासा मेधाविलासवर्धिनी ॥ ८३६

मैत्रावरुणसन्नुता मोक्षसन्मार्गगामिका ।
मौक्तिकावलिकल्लोला मौनमानसवासना ॥ ८३७

मौनध्याननुता गङ्गा मौनहिम्याचलानदा ।
मौनध्यानमनोगेया मौनीकृतमनोनदा ॥ ८३८

मौनाधारश्रुतिर्गङ्गा मौनात्मलयवाहिनी ।
मौनहैमनदासारा मौननादघनाघना ॥ ८३९

यतमानसपूज्या च यतिश्रेष्ठनुतापरा ।
यातसज्जनकालुष्या यात्रासंपरिपूरणी ॥ ८४०

यागङ्गा यानलावण्या युक्तमानससालया ।
येष्ठपेयूषवाक्स्रावा योगिनीवाग्लयालया ॥ ८४१

योगसारनदासारा योगसङ्गीतगालया ।
योगनी योगतत्त्वार्था योगिनी योगिनीलया ॥ ८४२

रससङ्गीतवाग्धारा रससङ्गतिवाग्गतिः ।
रसवाग्रससंवाहा रसिका रसिकावनी ॥ ८४३

रागाचलसुवाग्धारा रागवाक्सत्स्वरूपिणी ।
रागाद्रिरसकूटस्था रागगङ्गा सुरागिणी ॥ ८४४

रिक्थधर्मार्थमोक्षा च रिप्रवाहप्रवाहिणी ।
रीतिरागातिरागा च रीणवाग्धारवाहिनी ॥ ८४५

रुक्मस्फुरा रुचा गङ्गा रुचिस्फूर्तिप्रवाहिणी ।
रुजाकररुजा माता रुद्रमूर्धन्यशीतला ॥ ८४६

रूपसद्गुणवैशेष्या रूढानुरागपूजिता ।
रेखारूप्यसुरीतिश्च रैवताचलपुत्रिका ॥ ८४७

रोचिःपूरा मनोरोचा रोधोवती च रोगहा ।
रोमाञ्चनकराप्लावा रौद्रादिरिपुसूदनी ॥ ८४८

लवणालवणाप्लावा ललत्तरङ्गरङ्गभा ।
लक्ष्यनीरवनीरा च लयावहलयावहा॥ ८४९

लालिताह्लादितास्नाता लाघवश्लोकलाञ्छिता ।
लालसापरिपूर्णा च लाघवाप्लावलाञ्छिता ॥ ८५०

लिप्यतीतप्रभावा च लिखितश्लोकदेवता ।
लीनमानससँल्लीना लीलाकल्लोलपूरिता ॥ ८५१

लुटितोपलसंवाहा लुलितार्तिप्रशामनी ।
लुलितोल्लोलसौम्या च लूनभावसुमार्चिता ॥ ८५२

लेखनातीतसौरूपा लेखाक्षरस्वरूपिणी ।
लेख्या लेख्यप्रवाहा च लेश्यालासमनोहरी ॥ ८५३

लोकत्राणागता गङ्गा लोक्या मा लोकपावनी ।
लौकिकातीतभावा च लौकिकातीतसौख्यदा ॥ ८५४

वनारामा वनोधाम्नी वनिनी वनिनीप्रिया ।
वप्रहैमाचला गङ्गा वरिष्ठा वसुमातृका ॥ ८५५

वाक्सम्पत्तिप्रसादा च वाक्स्वप्रसादभासिनी ।
वाक्पुष्पार्चितवाग्देवी वाग्दीपावलिलासिनी ॥ ८५६

वाग्वर्षाराधिता गङ्गा वाग्वर्षवर्णलासिका ।
वाक्सौष्ठवावहा देवी वाक्संप्रीणितवत्सला ॥ ८५७

वागर्थभावपुष्टिश्च वाग्भावभावभाविता ।
वाङ्मण्डलावृता गङ्गा वाङ्मयी वाक्सुजीवनी ॥ ८५८

वानप्रस्थाश्रिता गङ्गा वासनापरिधावनी ।
वागपर्याप्तवाहा च वाक्पर्याप्तप्रवाहिणी॥ ८५९

विक्षेपक्षालना गङ्गा वितीर्णभवकानना ।
विद्राविताघसङ्घाता विस्तीर्णवारिवारिधिः ॥ ८६०

वीचिप्लवनवीचिश्च वीतिप्रवाहवीतिका ।
वीतरागमनोरागा वीणारागलयालया ॥ ८६१

वृन्दारकसमाश्राया वृन्दारगणवन्दिता ।
वृन्दारगणसंत्रात्री वृन्दारिका हिमाङ्गणा ॥ ८६२

वेदवेदान्तसत्सारा वेदसन्नुतसन्नुता ।
वेदवेद्यसुसज्ज्ञाना वेदान्तगोचरालया ॥ ८६३

वैचिन्त्यापोहना गङ्गा वैचित्र्यचित्ररूपिणी ।
वैकालिकप्रशान्ताभा वैकल्याद्यनुतिस्तुता ॥ ८६४

व्यक्तपूर्णत्वरूपा च व्याप्तश्लोकसहस्रभा ।
व्योमगङ्गा स्तवासारा व्यासक्तालोकनस्फुरा ॥ ८६५

शतभास्करभासा च शतेन्दुकरशीकरी ।
शतमेघधनुर्वर्णा शतकोटितडित्प्रभा ॥ ८६६

शतानना शतस्तोमा शतरागसुमालिका ।
शतश्लोकरया गङ्गा शतरत्ननिभस्फुरा ॥ ८६७

शतरागसुसङ्गीता शतिश्लोकसुरागिणी ।
शतनामप्रभावा च शतरागविलासिनी ॥ ८६८

शतश्लोकसुरागा च शतरागकृतिस्फुरा ।
शतकोटिनमस्कारा शतायुर्मङ्गलप्रदा ॥ ८६९

शतकोटिनुतिस्तुत्या शक्तिदा स्वशचीस्तुता ।
शंभुशेखरमाला च शक्तिस्वरूपिणी सरित् ॥ ८७०

शक्तितेजास्पदा गङ्गा शक्तिकूटनिवासिनी ।
शक्तिज्ञानतपोवर्धा शक्तित्रयविलासिनी ॥ ८७१

शातकुम्भनिभाभासा शान्तमानससन्नुता ।
शारीरोर्जावहा गङ्गा शाश्वतीयसुखावहा ॥ ८७२

शिवा शिवशिरोवाहा शिवरूपा शिवावहा ।
शिवावाहशिवा गङ्गा शिवाराधनशंवरा ॥ ८७३

शीघ्रगा शीतबा गङ्गा शीतांशुस्फुरदङ्कुरा ।
शीघ्रियप्रवहादिव्या शीलिताशीतनिम्नगा ॥ ८७४

शुक्तिकल्लोलशुक्रा च शुभाङ्कितशुचिप्लवा ।
शुचिस्स्फूर्तिश्शुभस्पर्शा शून्यमानसपूरणी ॥ ८७५

